समं समादाय समा विभूतिकाः ॥५३॥

बेलाध्वनि द्वेषिबलं दधद् ध्वनिं
तदा खलु ज्यां विशिखैः सनाथयन्।
पुरस्सरीभूय चमूपतिः स्वयं
रुरोध तत्प्राणदघ्नाणसंचयैः ॥५४॥

पुरः स्फुरन् कोऽपि खुरश्चमूं सृजन्
भयातुरां भैरवफेरवारवैः।
निमज्जयामास यशांसि संशये
युयुत्सुरस्या विविधायुधैः क्रुधा ॥५५॥

तदा तदावेशविनाशनाशया
पुरन्दरः सुन्दरधीरुदायुधः।
यशांसि तेनेऽस्य जयोदयादनु
स्मरंस्त्रिलोकीविजयार्जितान्यपि ॥५६॥

अनेन मर्मं घटयिष्यतस्तथा-
ऽप्यमित्रभावादनुगां बलस्य च।

---

१ समाः=सकलाः, विभूतिकाः=विभूतीः। २ सैन्यमार्गे। ३ 'कृपाणपाणिः सह सेनयाऽरुधत्' इति वा पाठः। ४ प्राणान् घ्नन्ति=खण्डयन्ति प्राणघ्ना बाणास्तेषां संचयैः।

अभूद् विलम्बः सुरसिन्धुसैकते
कृताष्टमस्यापि जिनस्य चक्रिणः ॥५७॥

प्रसन्नया स्वःसरिता तनूभृता
त्रिधेरवन्ध्यंच्छतया व्यलासि तत्र ।

विमुद्रपद्माननया सविभ्रम-
प्रकाशवद्दर्शनयाऽप्ययौद् नृपः ॥५८॥

मरालगत्याविलसत्तरङ्गया
न गङ्गया निर्मितचक्रसङ्गया ।

अभेदि तत्राद्दगनङ्गमार्गणै-
[3]र्मनोऽस्य नारीवपुषाऽपि च प्रभोः ॥५९॥

कृतं मनोभूवशवर्त्ति कान्तया
सरोजकोशस्तनहंसकस्पृशा ।

बलं तया तत् समभेदि मार्गणै-
र्यद[4]स्य पौष्पैरपि धैर्यकञ्चुकम् ॥६०॥

---

१ 'अयौत्' इति क्रिया. 'यु मिश्रणामिश्रणयोः' । २ आविला=रागेण कलुषा सत्ता=सद्भावो यस्य ईदृशो रङ्गः=चित्ताभिप्रायो यस्यास्तया, पक्षे विभिः=पक्षिभिर्लसन्तस्तरङ्गा यस्यां सा तया । ३ अस्य=प्रभोर्मनः स्त्रीरूपधारिण्या गङ्गया न अभेदि । ४ अस्य बलस्य अर्थाद् भटस्य ।

किमन्यदद्यापि यदस्त्रतापितः
शिवो वशीन्द्रः शिवया वशीकृतः ।
स्मरेण लक्षीकरणेऽपि लक्षशो-
ऽप्यलक्षधीर्नाप्यत लक्ष्यतां प्रभुः ॥६१॥
हरिर्यदासीज्जलधीहिताश्रयः
पितामहो वाग्जिमाश्रयत्यहो ! ।
अनङ्गजं तापमुपेत्य, सोऽप्यभू-
ज्जिनेश्वरेऽनङ्गज एव साङ्गजे ॥६२॥
सदङ्गसङ्गं कुलशैलशालिनीं
सितां निजाज्ञां दधतं स्वरूपतः ।
स्मरं तनुच्छायतया तमात्मनः
परं प्रभुर्नाक्रमितुं मनोभवः ॥६३॥
प्रसाधितेऽस्मिन् भरते महीभुजा
जनोऽपि नानाविषयान् प्रपन्नवान् ।
सदारतासक्तरुचिः सरित्तटं

---

१ निष्कपटमतिः । २ न लक्ष्यतां=वेध्यताम् आप्यत । ३ जलधौ ईहितः=वाञ्छित आश्रयो यस्य । ४ अनङ्गजः=अपुत्रः=वन्ध्य इत्यर्थः । ५ साङ्गजे=सपुत्रे ।

शशाङ्क शङ्के न स लङ्घितुं नरः ॥६४॥
उरोभुवा कुम्भयुगेन जृम्भितं
मनोभुवो दुर्गधिया जिघृक्षतः ।
[1]चमूपतेः सा ऽरमतोद्भवे निशो-
ऽप्यतीर[2]भावेन मतिः सतीरते ॥६५॥
क्रमात् प्रयाणेऽस्य पुरस्सराः पुरां
नवोपहारेण वयस्कृतेन किम् ।
अधीश्वराः स्वानुगतां गताः स्वयं
प्रसाद्य भेजुः सकलास्तमुद्धलम् ॥६६॥
जयादहंपूर्विकया स्ववाहिनी
ससाहसोत्साहतयाऽवगाहिनी ।
नृपाः सरिद्दुर्गमपि प्रतीर्य सा
[3]स्वतः परावृत्य ददौ स्वदौर्जने ॥६७॥
स्वदुर्गभङ्गे भवनेऽवनेर्जने
वने विलग्ने जडता ह्सत्त्रपा ।

---

१ चमूपतेः=नैषधस्य सतीरते मतिः अरमत २ अपारतया ।
३ स्वतः=धनात्=धनं गृहीत्वा नृपा ददौ दौर्जने=दुर्जनसमूहे ।

[1]भयाद् रिपूणां नृपतेः स्फुरन्महो-
ऽ[2]नलस्य [3]तन्वी हृदयं विवेश यत् ॥६८॥

अपह्नुवानस्य जनाय यन्निजाः
प्रजाः क्वचिच्छैलवनादिषु द्विषः ।
मृगेक्षणानामभवच्चला दशा
मृगेक्षणानामिव भूमिभृद्भयात् ॥६९॥

अजन्यतश्चञ्चलया दधद् रिपो-
रधीरतामस्य कृतं मनो [4]भुवा ।
अनाधिपत्यं दिशतीममुं स्वतः
स्वतः स तत्याज [5]सराजराजताम् ॥७०॥

धवे भुवो वा विधवे वधूजने
द्विषां वियोगादसुखं यदुन्मुखम् ।
अबोधि तज्जागरदुःखसाक्षिणी

---

१ रिपूणां हृदयं जडता विवेश नृपतेर्भयात् । २ "अनलोऽनिले वसुदेवे वसौ वह्नौ" इत्यनेकार्थः । ३ तन्वीव तन्वी लुप्तोपमा । ४ भुवा=भूम्या अस्य=चक्रिणः रिपोर्मनः अधीरतां दधत् कृतम् । किं० भुवा, अजन्यतः=युद्धात् चञ्चलया । अमुं भुवं सः=रिपुः स्वत एव तत्याज । ५ राजराजता=ऐश्वर्यं तेन सहितां भुवं तत्याजेत्यर्थः ।

तडागभागस्थरथाङ्गपक्षिणी ॥७१॥

समुच्छलद्वाजिरजोभिरञ्जसा
नभस्तले संतमसाकुले-रिपोः ।
पुरश्चलच्चक्ररुचा-सुहृत्व कृता
निशा च शय्या च शशाङ्ककोमला ॥७२॥

नृपप्रतापाम्बुजबान्धवोदये-
सुहृद्वधूनामिव वर्धने श्रियाः ।

---

१ चक्रवाकी । २ अरिपोः=मित्रस्य निशा सुहृत्=प्रिया कृता पुरश्चलच्चक्ररुचा शशिसुन्दरा । रिपोः=द्विषः चक्ररुचा असुहृत्=आपाहरी निशा कृता; शय्या शशानाम् अङ्कः=चिह्नं यस्यामीदृशी कोमला च "कोमलं मृदुले तोये" । ३ सैन्यं चक्रं वा । ४ अनसु=अप्राणं हृद् येषामीदृग्रिपूणाम्, सुष्ठु हरतीति सुहृत्=चौरः । नृपेति० चक्रिणः प्रतापसूर्योदये सति मित्र-स्त्रीणां भोगादिना निशा प्रियाऽभवत् । प्रतापसूर्यस्य नित्यत्वात् चौरस्त्रीणां न प्रियाऽभवत्, रात्रौ चौर्याधिकारात् चौर्यप्रवृत्ते-रभावात् । यद्वा, अकारप्रश्लेषाद् असुहृद्वधूनां रात्रिः प्रिया नाशनावसरत्वात् । सुहृन्मृगीदृशां=मित्रस्त्रीणां रात्रिर्न प्रिया, प्रतापसूर्यस्यास्तप्रापणशङ्कया इव । वर्धनं=छेदनं वृद्धिर्वा । धन-प्राप्तौ स्त्रीणामन्तःपुरकपत्वेन निशायां कार्यकरणादिना प्रिय-त्वम् असूर्यंपश्यत्वात् । पक्षे धनच्छेदने धनेऽपि यथेच्छं भ्रमा-भावाद् निशा प्रिया निरलंकारवसनत्वेन न स्यात् । शशानां जीवानाम् अङ्कः=चिह्नं तेन सुन्दरा च न स्वभूमेः ।

प्रियाऽभवत् सा-न-सुहृन्मृगीदृशां
    निशा च शय्या च शशाङ्ककोमला ॥
स्मरोपतप्तोऽपि भृशं न स [1]प्रभुः
    प्रभोर्निदेशेन विना कदाचन ।
[2]चमूपतिर्भीमभुवा कनिष्ठया
    वशीकृतस्तां परिणेतुमुत्सुकधीः ॥७३॥
नृपस्य तद्भावविदो निदेशतो
    विदर्भराजं तनयामयाचत ।
रसेन सेनापतिरप्युदूढवान्
    निगूढभावामपि तां तदन्तरे ॥७४॥
कृपाणतः केचन केऽपि चक्रतः
    परेऽपि तन्[3]मार्गण[4]वेधमार्गतः ।
त्यजन्त्यसून् शर्म च मानिनो वरं
    भुवि स्म सैन्येऽस्य समीपमागते ॥७५॥
अयाचितैरेव नयाश्चितैर्जया-
    दुपायनैरागमनादुपायैनम् ।

१ परिणेतुं न प्रभुः=न समर्थः । २ चमूपतिः=नैपधः । ३ मार्गणाः=बाणाः । ४ मार्गम् ।

कृतः प्रसन्नः स यतो महाशया-
स्त्यजन्ति न त्वेकमयाचितव्रतम् ॥७६॥

मृषा विषादाभिनयादयं क्वचिद्
नृपाय नूनं नमते स्वतेजसा ।
तदीयदुर्णीतिनिवारणेच्छया
रणेच्छया स्वक्रुधमप्युपादिशत् ॥७७॥

यदा प्रयाणान्तरितापि भीमजा
जुगोप निःश्वासततिं वियोगजाम् ।
मिषेण केनाप्यवगम्य तज्जनाद्
निनाय तां क्वाप्यवलम्ब्य संनिधिम् ॥७८॥

[1]नैवाप्यथासन् निधयः स्त्रियोऽनुगा
[2]भुवा निगूढा अपि साधनात्प्रभोः ।
[3]विलेपनस्याधिकचन्द्रभागना-
र्पणात्[4]सितास्या इव मुद्रयान्तिके ॥७९॥

क्वचिच्च दानावसरे विमुद्रणाद्

---

१ नवापि नवसंख्या निधय आसन्। २ भूम्यन्तरे। ३ विलेपनमत्र मुद्रणाय कृतं तत्र कर्पूराधिकक्षेपात्। ४ सितास्याः= प्रसन्नतया उज्ज्वलाननाः, 'षिञ् बन्धे' निबद्धास्या वा ।

विभेद शङ्खस्य निधेः स धैर्यकम् ।
मुखे तथा भीमभुवोऽधिचन्द्रता-
विभावनाच्चापललाप पाण्डुताम् ॥८०॥
शशाङ्क निह्नोतुमये न तत्प्रिया
प्रियाशयं साम यदा स चाश्रयत् ।
तदीयकोपस्य जिहीर्षुश्चेतसा
तदा चकारानुनयं नयं विदन् ॥८१॥
पुरस्थितां तामनुनीय साशय-
मयं बभाषे यदलीकवीक्षिताम् ।
क्षितीश्वरः किं क्षितिमीक्षसेऽधुना
मयि प्रिये विप्रियमादधासि किम् ?॥८२॥
ततः प्रियामित्यनुनीय सत्त्वतः
समाधिमाधाय निजात्मनात्मनि ।
समाज एवालपितासु वैणिकैः
प्रणीतवीणासु रराज राजभिः ॥८३॥

---

१ अधिकस्वर्णभूषणादिप्रकटनात् "चन्द्रोऽम्बुकाम्ययोः स्वर्णे सुधांशौ कर्पूरे कम्पिल्ये मेचकेऽपि च" इत्यनेकार्थः । २ "पाञ्चालः स्त्रीषु मार्दवम्" इति नीतिम् ।

सधर्मधीः कर्म सशर्मनर्मणे
प्रवर्तयन् सद्व्यवहारधारणः ।
न वीतरागः स विनिश्चयात् पुन-
र्मुमूर्च्छ यत्पञ्चममूर्च्छनास्वपि ॥८४॥

अवाप सापत्रपतां स भूपति-
र्गुरुत्वमन्यत्र नयाय शिक्षयन् ।
प्रशास्यमुद्दिश्य दयादमक्रमं
पुरः पुरश्चात्मविबोधनक्षमम् ॥८५॥

दधार यो वा चरणेऽतिकौशलं
जितेन्द्रियाणां धुरि कीर्त्तितास्थितिः ।
दधारयोवाच रणेऽतिकौशलं
स मार्गणीये विषयं श्रयन् स्वयम् ॥८६॥

पुरः प्रयाणे न्यरुधद् न कोऽप्यमुं
यियासुमग्रे खलु हास्तिनापुरम् ।

---

१ अन्यत्र=लोके सापत्रपतां शिक्षयन् । २ यो रणे इति कौशलं दधार । ३ द=दान तत्र धारया=जलस्य निरन्तरतया उवाच । ४ रणे=शब्दे श्रुते । ५ अयोध्यामतिक्रान्तम् । ६ मार्गणीये=याचकसंबन्धिनि, 'रणे' इत्यस्य विशेषणम् । ७ विषयं=देशम् । ८ अयन्=भजन् ।

[1]असंवरेऽसंवरवैरिविक्रमे
 विना[2] श्रमं भङ्गमुपेयुषि क्रमात् ॥८७॥
असाधयत् साधनमप्यबाधया
 स भारतं प्राप्य जयादनारतम् ।
प्रताप भानावुदयाद्रिसानुनि
 क्रमेण तत्र स्फुटतामुपेयुषि ॥८८॥
अलं नैलं रोद्धुमिहाभवन्नमी
 भ्रमीर्भजन्तो रिपवोऽस्य कानने ।
क्वचिद् विसृष्टं विषमस्थलेऽचले
 जलेऽतिदुर्गे स्वेत एव दुर्गताः ॥८९॥
नयं विनिन्युः प्रचलन्नृणां बलं
 गुणा विवेकप्रमुखा न चापलम् ।
ततः सुखायाजनि तन्निवेशनं

---

१ पुरःप्रयाणे कीदृशे, असंवरे="सेतौ पाल्यालिसंवराः" इति कोषात् सेतुरहिते । " शम्बरं जले चित्रे बौद्धव्रतभेदे शम्बरो दानवान्तरे मत्स्यैणगिरिभेदेषु " । असंवरः=प्रबलः वैरिविक्रमः । २ "विना श्रमं नश्यति तस्य तेजसा" इति वा पाठः । ३ पर्वतादौ स्थानविशेषम् । ४ स्वतः=धनात्, दुर्गताः=दरिद्राः । ५ बलं गुणा नयं=नीतिं निन्युः, न पुनश्चापलं=चपलत्वं निन्युः ।

स्वसीम्नि देशेऽपि च तत्प्रवेशनम् ॥९०॥
नयप्रवादी प्रतियानमानदन्
पटुः पद्व्यां पटहस्तथाहतः ।
स्मरः[1] सरन्त्याम्[2] अनिरुद्धमेव[3] यद्
विरुद्धतां वारयति स्म संगतौ ॥९१॥
नृपे प्रजायां सकृपैर्नयाऽव्यया-
दनीतिकृद् भीतिमुपैति दुर्जनः ।
रविच्छविनों किमुलूकमूकतां
सृजत्ययं सर्गनिसर्ग ईदृशः ॥९२॥
अनङ्ग[4]चिह्नं स विना शशाक नो
प्रवक्तुमन्यत् तदनन्यमानसः ।
यथा[5] भवे भावि तथैव भावना
पुरः स्फुरेद् धातुरिहातुरे हृदि ॥९३॥

---

१ स्मर्यते इति स्मरः=लोकैः स्मरणयोग्यः। २ सरन्त्यां=चलन्त्यां पद्व्यां=एकपदीमार्गविशेषे । ३ अनिरुद्धं=चपलं नरं विरुद्धतां वारयति स्म । ४ अनङ्गा इह सिद्धास्तेषां चिह्नं ज्ञानं विना। ५ यथा भावि=अनागतं वस्तु भवे=संसारे, तथैव भावना धातुर्मनसि पुरः स्फुरेत् ।

अलं विरक्तोऽपि न राज्यधूर्भराद्
यदासितुं संसदि यत्नवानपि ।
नियोगिनोऽपास्य स योगिनोऽङ्गिनो
विनोदहेतून् विदधे सदःसदः ॥९४॥
ततः समुत्थाय वने तपस्विना
यशस्विनाऽनेन समं समासितुम् ।
क्षणं तदारामविहारकैतवा-
दभाजि राजापि तदीयमण्डलम् ॥९५॥
तदन्तरे दन्तुरिते नभोऽन्तरे
शरैश्चलद्भिः करवालचालनैः ।
निदेशलाभाय नरेशपेशलं
निषेवितुं देशमियेष नैषधः ॥९६॥
अथ श्रिया भर्त्सितमत्स्यलाञ्छनः
क्वचित् परोपहृतमण्डलश्रुतेः ।
स यानहेतुं पटहं स्फुटं दृशा-
प्यवीवदद् योधविबोधनोन्मनाः ॥९७॥

---

१ मुक्त्वा । २ सदसि सीदन्तीति सदःसदः तान् । ३ राट्शब्दः तत्र तृतीया ।

स्वतन्त्रमामन्त्रणयाऽप्यमीमिलत्
सभं वयस्यैः स्वरहस्यवेदिभिः ।
चलाचलं भूपबलं क्रुधा ज्वलद्
महोज्ज्वलं स्वामिविधेर्विधित्सया ॥९८॥
क्षितीशिता सैन्यपतेर्गिरा गुरुः
स्वतेजसे वाऽगरुवद् रिपून् दहन् ।
पुरोपकण्ठं सवनं किलेक्षिता
न्यवेशयद् वस्त्रकुटीः पटीयसीः ॥९९॥
स्वयं समारोढुमना निगूढधी-
स्तुरङ्गमं निस्समम्ष्टमङ्गलम् ।
रयादुपानेतुमहेतुयोगतो
दिदेश यानाय निदेशकारिणः ॥१००॥
अमी ततस्तस्य विभूषितं सितं
यशोभिरीशस्य दिशोऽभितः स्थितैः ।
अतुच्छपुच्छे तदुरःखुरे पुनः
सुपर्णकीर्त्त्येव च मूर्त्तया श्रितम् ॥१०१॥
उपाददुस्तस्य तुरङ्गपुङ्गवं

जवेऽपि मानेऽपि च पौरुषाधिकम् ।
धरां समुत्सृज्य नभो यियासया
निजक्रमैराक्रममाणमुच्चकैः ॥१०२॥
हयं सपक्षैरुभयांशसंगतै-
र्नरेशवस्त्राञ्चलरूपशालिभिः ।
द्विधा विपक्षं[1] किल जेतुमुद्यतं
परेऽपि मत्वाऽवसरं परं पुरः ॥१०३॥
उदीतपक्षैरिव सादिनि स्थिते
तदंशुकस्योभयपार्श्वतोऽञ्चलैः[2] ।
उपाहरन्नश्वमजस्रचञ्चलै-
रमी[3] विहङ्गैः सह यातुमुत्सुकम् ॥१०४॥
दिशां जयायोद्धुरसाधने मयि
नवं धनं साधु न बन्धनं पुनः ।
इतीव रोषादतिशायिपौरुषात्
खुराञ्चलैः क्षोभितमन्दुरोदरम् ॥१०५॥
अथान्तरेणाऽवटुगामिनाऽध्वना-

---

१ वीनां पक्षं वैरिणं वा गमनस्पर्धया, यद्वा विपक्षं=गरुडं जतुकान्त्या । २ अञ्चलैः=प्रान्तैः । ३ अमी=सेवकाः ।

ऽऽशयेन हेषारवमाप्तुमुद्यतम् ।
अहंकृतिः शुद्धमतेर्न संगता
हिताय लोकैरिति मौनमागतम् ॥१०६॥
यथा मुखे पृष्ठपदे तथा स्थिति-
र्निशीथिनीनाथमहःसहोदरैः ।
करैरितीवाश्रितमुज्ज्वलैरलं
निगालभागेऽप्युरसा समैः समैः ॥१०७॥
महोदयं स्वामिनि कामितं जया-
दुपादिशद्भिः परितस्तथोर्ध्वगैः ।
निगालगाद् देवमणेरिवोत्थितैः
खगैर्मयूखैरिव सेवितं पुनः ॥१०८॥
प्रभावभारैर्भविता स भूमिभुक्
समारुहन् मा सविता सहस्ररुक् ।
सदावदातैरिति मञ्जुराजिभि-
र्विराजितं केशरकेशरश्मिभिः ॥१०९॥
अजस्रभूमीतटकुट्टनोद्गतै
रजोव्रजैर्दूरत एव गत्वरैः ।

विरोधभावाद् मलिनैस्तनुत्विषा
विषादयोगादिव नाश्रितं क्वचित् ॥११०॥
भुवः स्वमातुर्विरहासहैः पुन-
रुपास्यमानं चरणेषु रेणुभिः ।
पतद्भिरेतत्सहनं चिकीर्षुभिः
पदप्रणामे हि सतां प्रसन्नता ॥१११॥
सुवर्णपर्याणमणीमयाण्डजै-
र्विचित्ररूपैः परितोऽनुवेष्टितम् ।
रयप्रकर्षाध्ययनार्थमागतै-
स्तदीयतार्क्ष्याभिधयोऽधिभूधिया ॥११२॥
सपक्षभावात् प्रसरे सरस्वतीं
दिदृक्षुभिर्मङ्क्षु रजःकणच्छलात् ।
पदप्रसक्तैः सततं समन्वितं
जनस्य चेतोभिरिवाणिमाङ्कितैः ॥११३॥
चलाचलप्रोथतया महीभुजे
निबोधयन्तं च सुगन्धिबोधने ।

---

१ कृत्रिमपक्षिचित्ररूपैः। २ अधिभूः=स्वामी तार्क्ष्यः तद्बु-द्ध्या ।

चतुष्पदेभ्यः प्रणयेऽपि चाधिकं
स्वमश्ववर्गे पुरुषे सुखावहम् ॥११४॥
रवेरवेक्ष्याश्वगणे गतेर्भिदः
स्ववेगदर्पानिव वक्तुमुद्यतम् ।
तदीयशिक्षाविषये वियत्कृत-
क्रमं सिसृक्षुं त्वदसीयमान्द्यतः ॥११५॥
क्व सूरसूतानुजधीः क्व मे प्रभा
द्युनाथजस्येत्यभिधातुमुत्सुकम् ।
अलं गिरा वेद किलाऽयमाशय
महाशयश्चेति विमृश्य मौनिनम् ॥११६॥
विजेतुमुच्चैःश्रवसं हयं हरे-
र्भयादिवोच्चैर्ध्रुवमुल्लसत्पदम् ।

१ प्रणये=स्नेहे, च=पुनः सुगन्धिज्ञाने स्वम्=आत्मानम् अधिकं राज्ञे ज्ञापयन्तम् । २ प्रत्यहं भिन्नभिन्नगतिभेदान् । ३ अमीषां रविहयानाम् इदम्=अदसीयं मान्द्य=मूर्खत्वं गतिमन्दतां वा । ४ गरुडः । ५ 'अश्वाः सूर्यादुत्पन्नाः' इति कविसमयः । ६ उच्चैःश्रवसं विजेतुमिव उल्लसत्पदम्=उच्चैर्लसन्तौ पदौ क्रमौ यस्य तम् । हरेः=इन्द्रस्य मम सगोत्रिणः हयस्य गतौ मनः मा व्यधादिति हेतोर्मौनमास्थितम् । मौनमिह संवरं निषर्तनं शनैश्चरत्वमाश्रितम् इति भयाद् ध्रुवम् ।

न वैमनस्यं घटते सगोत्रिणः
स्वयं हयस्येति च मौनमास्थितम् ॥११७॥
महारथस्याध्वनि चक्रवर्तिनः
परः प्रयाणश्रवणाददुद्रुवत् ।
अमंस्त तत्राशरणः शरण्यता-
मरण्ययोगस्य निशां विशां दिशा ॥११८॥
हयं तमारुह्य जयं पुरःस्थितं
स मन्यमानः प्लवमानमानसः ।
परानपेक्षोद्वहनाद् यशः सितं
प्रमोदकामोदधियाऽविशद् वनम् ॥११९॥
चमूचराणामतिचारुखेलनैः
परस्परप्रेरणवादिसादिनाम् ।
रदावदातांशुमिषादनीदृशां
बभौ विभुस्तत् पिबतां यशोऽन्तरे ॥१२०॥

---

१ शत्रु.। २ अरण्यवासस्य तथा निशां=रात्रीणां शरण्यतां बुबुधे विशां=नराणां दिशा=मार्गेण। ३ प्लवमानं=विस्तीर्यमाणं मानसं=मनो यस्य सः। ४ आमोदो=हर्षः परिमलो वा। ५ अनीदृशां=द्विषां यशः पिबतां सादिनामन्तरे विभुर्बभौ।

दर्दर्श तं सादिगणं समीरणै-
र्द्विधाकृतस्पर्धनवर्धनं प्रभुः ।
प्रसृत्वरैर्वाजिबलैश्च सत्वरै-
र्हसन्तमन्तर्बलमर्वतां रवेः ॥१२१॥

सितत्विषश्चञ्चलतामुपेयुष-
स्तुरङ्गरङ्गन्निवहस्य चास्यतः ।
भ्रमात् पतत्फेनमिषादरेर्यशो-
निपातनं मर्दनहेतु सोऽस्मरत् ॥१२२॥

विधूनतो वैरियशोऽधुनाऽधुनाद्
मिषेण पुच्छस्य च केसरस्य च ।
तदा तदाश्वस्य पदात् पदान्तर-
स्पृशः समाश्वस्य जनानयं भ्रमात् ॥१२३॥

प्रभोर्यशोऽपि प्रससार सर्वतः
क्ष्मातलं वाऽऽप्य[2] नभस्तलं पुनः ।

---

१ आश्वस्य पुच्छस्य च=पुनः केसरस्य विधूनतः कम्पितस्य मिषेण वैरियशोऽधुनात्=चकम्पे, अन्तर्णिजर्थः । किं कृत्वा, पदात्=स्थानात् पदान्तरस्थान् जनान् समाश्वस्य । अयं=चक्री ।
२ आप्य=प्राप्य ।

स्फुटं चलच्चामरयुग्मचिह्नै-
  [1]र्बभूव रूपं [2]तदखण्डपिण्डितम् ॥१२४॥
विनोदसिद्ध्यै स नुनोद सोदरं
  गरुत्मतः स्वं पुरतोऽश्वमाशुगम् ।
सितातपत्रोद्भवदंशुमण्डलै-
  रनिह्नुवानं निजवाजिराजताम् ॥१२५॥
अपि द्विजिह्वाभ्यवहारपौरुषे
  [3]रुषेव धिक्कारकरे गरुत्मति ।
हयेऽधिरूढश्च वसुन्धराधवः
  पराजयायैव [4]स-दा-नवद्विषः ॥१२६॥
स्फुटीकृता श्रीरमुनेन्द्रधन्वनो
  मुखानुषक्तायतवल्गुवल्गया ।
हयेन तत् किं न स चक्रभृज्जिनः
  सहस्रनेत्राकृतिमान् भवेदहो ! ॥१२७॥

---

१ "स्वरूपमादेशि तदीयमेव किम्" इति वा । २ तस्य यशसः संपूर्णपिण्डितम्, प्रतिस्थानमखण्डतायोगात् । ३ रुषा इव=क्रोधेनेव । ४ सदा सर्वदा अनवाः=जीर्णाः, नवा वा, स चक्री; दानवद्विषः=कृष्णस्य पराजयाय=भङ्गाय ।

जिनो मनोभूविषयं स्वरूपतो
यमश्वमारुह्य जिगाय विस्मयात् ।
उपेयिवांसं प्रतिमल्लतां रय-
स्मये जयात्तं मनसः स्मरेन्न कः ? ॥१२८॥

विभुर्दधौ कांचन काञ्चनात्विषं
स्वकीयतन्वाऽद्भुततेजसा पुनः ।
तदा प्रभां वाहनमस्य तां रय-
स्मये जितस्य प्रसभं गरुत्मतः ॥१२९॥

गच्छाधीश्वरहीरहीरविजया-
म्नायें निकाये धियां
भृत्यः श्रीविजयप्रभाख्यसुगुरोः
श्रीमत्तपाख्ये गणे ।
शिष्यः प्राज्ञमणेः कृपादिविजय-

---

१ जिनेन मनोभूविषयो जितः. तर्हि मनसः जयात् तं हयं को न स्मरेत् ? मनसि भवतीति मनोभू ईदृशो विषयः गोचरस्तं जिगाय वशीचक्रे=यावान् मनोगोचरस्तं सर्वं जिगायेत्यर्थः ।
२ नैषधीयस्य प्रथमसर्गस्य ६३ श्लोकः ।

स्यां[1]शास्यमानाग्रणी-
श्चक्रे वाचकनाममेघविजयः
शस्यां समस्यामिमाम् ॥१२०॥

इति श्रीनैषधीयमहाकाव्यसमस्यायां महोपाध्यायश्रीमेघविजयगणि-
पूरितायां द्वितीयः सर्गः संपूर्णः ॥ श्रीः ॥



१ आशास्यन्त इत्याशास्यमानाः=शिष्याः ।

## ॥ अथ तृतीयः सर्गः ॥

---

स सिन्धुजं शीतमहःसहोदरं
जयन् यशोभिर्विजयौजसां भरैः ।
पुरःप्रयाणं प्रति हस्तिनापुरं
चकार कारुण्यधियाऽरुणीभवन् ॥१॥

नृपाधिरोहे परितो मनोहरं
हरन्तमुच्चैःश्रवसः श्रियं हयम् ।
सकण्टकैस्तैः सुभटैः स्फुटीभव-
द्घनाघनच्छायममंस्त हस्तिनम् ॥२॥

रिपूरगाणां विषये विषच्छिदे
हरन्तमुच्चैःश्रवसः श्रियं हयम् ।
स-वै-नते-यं तनुमन्तमन्तरा

१ सिन्धुजं=समुद्रजम्=ऐरावणं शीतमहसः=चन्द्रस्य भ्रातरं यशोभिर्जयन् । विजयतेजसा अहःसहोदरं=सूर्यम् । कथम्० पुरःप्रयाणं शीतं शान्ततया शनैः शनैरिति । २ "नृपाधिरोहात् सुमनोमनोहरं" इति पा । ३ सः=चक्री वै=निश्चितं नते=नम्रीभूते हयम=अश्वं प्रसादेन प्रतिपादयन्=ददत् ययौ=चचाल । किं० इयं तनुमन्तं=मूर्तं अयं=शुभभाग्यम् । 'प्रसादात्' इति "गम्ययपः—(सि० हे० २।२।७४) इति पञ्चमी, प्रसादं प्रपद्य ।

नृपे प्रसादात् प्रतिपादयन् ययौ ॥
जयेन दीप्तः स निजाङ्गजन्मना
पुनर्जयन्त्या सुरसेनयान्वितः ।
जिताखिलक्ष्माभृदनल्पलोचन-
श्रिया तदैन्द्र्या रुरुचे विरोचनः ॥३॥
सहस्रदेवैः कृतसेवयेव यो-
ऽश्वरत्नमासीद् बहुरत्नभूषणैः ।
पट्टकृतारात्रिकमुच्चशासन-
स्तमारुरोह क्षितिपाकशासनः ॥४॥
निजा मयूखा इव तीक्ष्णदीधितिं
सरित्प्रवाहा इव पाथसां निधिम् ।
विरेजिरे राजसमाजराजयो
जयोर्जितात् तं[1] सृतसंगता गताः ॥५॥
निरीक्ष्य केचिच्चतुराः पुराधिपाः
स्फुटारविन्दाङ्कितपाणिपङ्कजम् ।
स्वतोऽपि विश्वंभरमेव मानसे
स्मृतिं दधानाश्चरणौ प्रपेदिरे ॥६॥

---

१ तं=भगवन्तं गताः=प्राप्ताः धृतमित्रभावाः ।

पथे चलन्तं यदि वा स्थितं रथे
तथेति तस्यैव मनोरथैरिताः ।
तमश्ववारा जवनाश्वयायिनं
वने जने वा प्रधने निषेविरे ॥७॥
स्थिते प्रभौ स्थैर्यधियश्चलाशये
नृपेऽचलायाः प्रभवश्चलाचलाः ।
परं शयानेऽप्यशयालवोऽद्भुतात्
प्रकाशरूपा मनुजेशमन्वयुः ॥८॥
चलन्नलंकृत्य महारयं हयं
स शक्रवच्चक्रधरो धराधरान् ।
प्रकम्पयन्शेषविशेषभीतये
तयेह जज्ञे गजवाजिसेनया ॥९॥
करेण रेणोः स्वशिरस्यहो धृतात्
स्ववाहवाहोचितवेशपेशलः ।
जगाद सादी गजपालबालकं
करोत्ययं तत्समलं परालकम् ॥१०॥

---

१ अयं=तव करी रेणोः स्वशिरसि धृतात् परालकम्=अन्य-वैरिणं समलं कुरुते=मलयुक्तं तनुत इति चित्रम् ।

कदाप्ययं पट्टगजे रजन् क्वचित्
स्ववाहवाहोचितवेशपेशलः ।
सुखासने वा नरवाहने स्थितो
द्रुतं ययौ चित्तनिलीनकौशलः ॥

(पाठान्तरम्)

मृगाक्षिलक्षैः समवेक्ष्ययं चलन्
बलादतुच्छोच्छलदध्वरेणुभिः ।
प्रमोदनिस्पन्दतराक्षिपक्ष्माभि-
र्निरुद्धमानेक्षणमप्यातिक्षणात् ॥११॥

स वन्द्यमानोऽप्यनवद्यधीर्नृपैः
कृपाणपाणिः कृपणैर्निजौजसा ।
पदं दधानो न मदं मनागयं
व्यलोकि लोकैर्नगरालयैर्न लैः ॥१२॥

क्षणादथैष क्षणदापतिप्रभः
प्रभानुसंधानकरः स्वमण्डलैः ।

---

१ उत्सवात् । २ यैः पौरैर्न पूर्वं लः=इन्द्रः व्यलोकि नैः अयं लः=इन्द्रः व्यलोकि 'अयमेवास्ति इन्द्रः नास्मात् परः कोऽपीन्द्रः' इत्याशयः ।

अनीत्यधर्मादिषु हानिकृद् ययौ
नरैः परं गीतयशाः सकिंनरैः ॥१३॥
इतस्ततो द्विड्नगरप्रभञ्जनात्
प्रभञ्जनाध्येयजवेन वाजिना ।
जनान् विमुच्यैव गतं क्वचिन्निशि
द्विषा विषादेन विषाऽदनेच्छया ॥१४॥
महीभृताऽऽतिथ्यकृता प्रवेशितः
कृतार्थतामात्मनि जानता क्वचित् ।
सहैव ताभिर्जनदृष्टिवृष्टिभिः
पुरं पुनाति स्म स चक्रभृज्जिनः ॥१५॥
स तत्र चित्रेण दिनानि कानिचिद्
व्यतीत्य नीत्याऽनुदिनं नवोत्सवैः ।
सपौरलाजोपरिवर्षहर्षितं
बहिः पुरोऽभूत् पुरुहूतपौरुषः ॥१६॥
ततः प्रतीच्छ-प्रहर्रतिभाषिणी
द्विधा विभक्तेव पुरस्सरा चमूः ।

१ किंनरसहितैर्नरैः । २ द्विषा=वैरिणा क्वचिद् गतम् ।

नृपस्य तस्योभयपक्षविस्तृता
जगज्जिघृक्षोरिव दोर्द्वयी बभौ ॥१७॥
बले नृपस्यानुगताग्रगामुके
परस्परोल्लासितशल्यपल्लवे ।
पयोधिवेले इव दुर्धरे नद-
त्त्रिरेखचक्राश्वगजे विरेजतुः ॥१८॥
प्रभोरलं दर्शयितुं निजं बलं
बलोत्कटास्तत्र भटा नटा इव ।
मृषा मृधं सादिबले कुतूहलाद्
निबध्य वध्यस्य रिपोर्भियेऽभवन् ॥१९॥
जलस्य दुर्गे ह्यनलस्य संभवे
खलस्य कालाय युधे बले चले ।
निवेश्य तद्वारिपदार्थमानने
नलस्य नासीरगते वितेरतुः ॥२०॥

---

१ नलस्य=स्थानविशेषस्य आनने=मुखे जलस्य दुर्गे सति तस्य जलदुर्गस्य वारकं निषेधकं पदार्थं नौप्रमुखं निवेश्य बले द्वे वितेरतुः । अनलस्य संभवे वह्निसंसर्गे तस्य वह्निवारकं पदार्थं जलवाहादिकं निवेश्य बले द्वे वितेरतुः=तरणं चक्रतुः ।

प्रयातुमस्माकमियं कियत्पदं
भवेत् त्रिलोकीति यशोऽस्य पिण्डितम् ।
मृगाङ्कताराागणतारकैतवाद्
नभस्यसंख्येयमपीह संख्यजम् ॥२१॥
पवित्रिता श्वेतपयोजमूर्त्तिभि-
र्धरा तदम्भोधिरपि स्थलायताम् ।
अखण्डडिण्डीरभरच्छलाद् यशः
समूढमित्यूढाधियेव भूभुजः ॥२२॥
किमर्कजायाः समलं जलं भवेद्
हिमाद्रिरूपेऽस्य यशोभरे स्थिरे ।
इतीव वाहैर्निजवेगदर्पितै-
स्तदङ्गजैर्गाङ्गपदात्तं तदाश्रितम् ॥२३॥
यशःस्वरूपैस्तुरगैर्दिशां गणे
प्रसृत्वरैः श्वेततरैः पुरःखुरैः ।
स्वगातृसंस्थानधिया सुदुर्धरैः

१ असंख्येयम्=अगण्यम् । संख्यजम्=युद्धजं यशः । २ समूढं=समूहभावेन स्थितम् । ३ वाहैः=हिमाद्रिजातशुद्धजलप्रवाहैः । ४ पदात्=मिषात् । ५ तत्=यमुनाजलम् । ६ स्वगायकनरनिधासधिया ।

पयोधिरोधक्षममुद्धतं रजः ॥२४॥
हरेर्यदक्रामि पदैककेन खं
त्रिभिर्धरेत्येव चतुष्पदीफलम् ।
बभूव पूर्वं द्विपदस्ततोऽधिका
गतिर्हरीणामुचिता चतुष्पदैः ॥२५॥

यद्वा—

हरेर्यदक्रामि पदैककेन खं
त्रिभिर्धरेत्येवमभूत् त्रिविक्रमः ।
ततो हरीणामपि रोदसीक्रमा-
च्चतुष्क्रमत्वं चतुरङ्घ्रिलङ्घनात् ॥
दिशां न सोऽंशोऽस्तु न यत्र संगतिः
पदैश्चतुर्भिः क्रमणेऽपि तस्य नः ।
पराङ्मुखीभूय दिशोऽपरां दिश-
मिति व्रजन्तोऽभिससञ्जिरे हयाः ॥२६॥
दिवाकराश्वीयजिगीषयोद्धतै-

१ विष्णोर्द्विचरणभाजोऽपि बहुशक्तिकत्वाच्चतुर्भुजत्ववत् चतुष्पदीफलं जातम् । तत्समयेऽपि स्वर्गादिनाच्चतुष्पदक्रमणम् ।
२ तस्य दिशोऽस्य क्रमणे दिशोऽवकाशाभावात् पराङ्वृत्ताः ।

हयैश्चतुर्दिग्विजयैर्नृपाश्रयैः ।
त्रपा हरीणामिति नम्रिताननैः
प्रपद्यते वारुणदिग्रवेर्हयैः[2] ॥२७॥
गतं त्रपापात्रतया दिगन्तरे
महोदयं नः समवेक्ष्य पाक्षिकैः ।
दिनेश्वराश्वैरिति चक्रिसाक्षिभि-
र्न्यवर्ति तैरर्धनभःकृतक्रमैः ॥२८॥
चमूचरास्तस्य नृपस्य सादिनो
विनोदिनोऽप्यस्य दिनोदये जयम् ।
विधाय सर्वत्र विचित्रवादिनो
निवेदयामासुरथो रथोद्धताः ॥२९॥
अलंकृताः केचन राजवाजिनो
जिनोक्तिषु श्राद्धतयेव सैन्धवाः ।
शनैश्चरन्तश्च-रणेऽतिकौशलाद्
धृतास्ययन्त्रा[3] अपि निर्वृतिं दधुः ॥३०॥

१ नास्माकं सर्वदिग्जयः, किन्तूदयास्तदिग्द्वयमेव । २ नृपाश्रयैः हयैः कृत्वा त्रपा । ३ श्राद्धपक्षे मुखवस्त्रिकादि, अश्वपक्षे मुखयन्त्रणम् ।

निनंसुना भूमिभुजापि भक्तये
पदे पदे [1]भूर्युपदाप्रदायिना ।
विहारदेशं तमवाप्य मण्डली
निवेश्य चक्रीशमकार्यतानुगैः ॥३१॥

स्थितस्य [2]तस्यां पुरतो निजाङ्गजा[3]
[4]मतङ्गजाश्चाकरजा महाध्वजाः ।
उपायनान्ये[5]भिरमुष्य भूमिपा
अकारयन् भूरितुरङ्गमानपि ॥३२॥

द्विषद्भिरेवास्य विलङ्घिता दिशः
पुरेषु दग्धेष्वयशोनिवेशनात् ।
प्रभञ्जनैर्देवयशोरथायितं
प्रभञ्जनैर्वैरिपुरां धुरां बलात् ॥३३॥

यथेष्टदानाम्बुभिरम्बुधिः सरो
यशोभिरेवाब्धिरकारि गोष्पदम् ।
न्यधायि पूर्णा वसतिर्भुवस्तले

---

१ भूर्युपदा=स्वर्णढौकनम् । २ मण्डल्याम् । ३ अङ्गजाः=पुत्रिकाः । ४ मतङ्गजा इभाः महाध्वजाः । ५ एभिर्वस्तुभिः उपायनानि भूमिपा अकारयन् ।

रिपुस्थले वाऽप्यमुना ह्यमातमा ॥३४॥
सुवर्णधारामवलोक्य मार्गणे
कृपाणधारां समरे समार्गणे।
इतीव धारामवधीर्य मण्डली
कृता धनैश्चापधरैस्तनूह्रिया ॥३५॥
भुजंगमैर्वक्रगतौ नृपाद् भिया
धृतं तलं शून्यपदं विलासिभिः।
विहंगमैः सा सकला ततश्चल-
क्रियाश्रियाऽमण्डि तुरङ्गमैः स्थली ॥३६॥
अचीकरन्नारुह्येन या भ्रमीः
भ्रमी मनाग् नेति चमूचरः परम्।
न्यवेदि यत् ताभिरलाभि तेऽरिणा
नरेश ! देशभ्रमिरेव नाश्रयः ॥३७॥

---

१ अमातमा=दर्शरात्रिः, अमाता=अगणिता मा=लक्ष्मीर्वा। २ धनुर्धराणां मण्डलं स्थानविशेषः। ३ चाप=धनुः, पक्षे अपां समूहः=आपम्। ४ विलेषु आसते विलासिनस्तैः, पक्षे विभिः= पक्षिभिर्लसन्त इति। ५ चमूचरः भ्रमीर्या न अचीकरत्, परं ताभिर्भ्रमीभिः इति न्यवेदयत्; इतीति किम्, नरेश! तव अरिणा भ्रमिरेव अलाभि।

अयं समारुह्य हयं प्रभामयं
  निजातपत्रस्य तलस्थलेऽनलः[1] ।
दिदेश नीराजनकर्मणे जनान्
  महौजसाऽऽविष्करणाय तेजसः ॥३८॥

प्रभोः प्रभावर्द्धिविधौ समादधौ
  [2]सहायता या मरुतां पतिर्भुवि ।
[3]मरुत् किमद्यापि न ताः सुशिक्षते
  सनाऽप्यनालस्यधियाऽनले सुहृत् ॥३९॥

प्रभूतदूतैरपि यः [4]कृताहवो-
  ऽप्यनाश्रवो[5]ऽभुत् पुरुहूतविक्रमः ।
तदत्ययः [6]प्रत्ययतः कृतोऽमुना
  वितत्य वात्यामयचक्रचंक्रमान् ॥४०॥

त्रिवेश गत्वा स विलासकाननं

---

१ अनलः महौजस्वा । अग्ने स्वतेजसः प्रकटीकरणाय नीराजनकर्म कार्यत इति । २ सहायता=मित्रभावा याश्चकार इन्द्रः भुवि=पृथिव्याम् । ३ मरुत्=वायुर्नागाधीशप्रसङ्गेन अनले=वह्नौ सुहृद् भूत्वा प्रभावर्द्धि समाधत्ते=वायुरनलमित्रं भूत्वाऽरिपुरदाहादिना साहाय्यं सुशिक्षते । ४ कृतामन्त्रणः । ५ आश्रवो=वचने स्थितः, अनाश्रवः=न आसाकृत् । ६ संमुखगमनात् ।

विहारयुक्तं मुनिराजिराजितम् ।
तदन्तिके पातककर्मणोऽन्तिके
न के चिदानन्दविदस्तदानके ? ॥४१॥
स सात्त्विकस्तात्त्विकवर्गसंगत-
स्ततः क्षणात् क्षोणिपतिर्धृतीच्छया ।
चकार चर्चां[2] श्रमणाश्रमेऽश्रमः
स्वसंपदो वैश्रमणः स्वसंपदाम्[3] ॥४२॥
ततः समुत्थाय महाशयः शयं
निवेशयन् वज्रभृदर्पिते शये ।
प्रवालरागच्छुरितं सुघुप्सया
ययौ वनं यौवनभृत् कृतावनम् ॥४३॥
वयोनिनादैर्जयवादमादधत्
प्रवालवालव्यजनैः समीरयत् ।
निशम्य सम्यग् वनमेष पिप्रिये
हरिर्घनच्छायमिवार्णसां निधिम् ॥४४॥

---

१ तेषां पदहे । २ "चर्चा स्याच्चर्ममुद्रायां चिन्तास्थासकयोरपि" इत्यनेकार्थः, कथं 'मया एषा संपल्लब्धा, किं दत्त्वा, किं तपस्तसम् ?' इत्यादिका । ३ स्वं=धनम् ।

चनान्तपर्यन्तमुपेत्य सस्पृहं
संमेत्य तच्छा[2]सनमन्यभूधनैः ।
पटालयाः शिश्रियिरे घटालयान्
पुरो दधानैर्बहुगन्धसिन्धुरान् ॥४५॥
परेऽप्यथासन्नचराश्वराचराः
क्रमेण तस्मिन्नवतीर्णदृक्पथे ।
विशश्रमुस्तच्छिबिरे विलम्बिनि
[3]भरावतारारवदुष्ट्रमालिनि ॥४६॥
मतङ्गजं वा[4]रिनिवारणं द्विधा
व्रजन्तमन्तःशिबिरं दिदृक्षताम् ।
न्यवर्त्ति दृष्टिप्रकरैः पुरौकसा-
म[5]सान्द्रभावाद्व्ययुपामुपेयुषाम् ॥४७॥
प्रविश्य तत्तन्नगरे ससाधनै-
र्धनैरुपादाय यथेष्टवास्तवम् ।
स्फुटं दिदीपे कटकं भटैर्जनै-

१ प्राप्य । २ आज्ञाम् । ३ भरस्य अवतारणे आरवन्तो ये उष्ट्रास्तैः शोभिते । ४ वारिनिवारणं=सेनां प्रति व्रजन्तम्, पक्षे अरिनिवारणम् । ५ पलायनात् ।

रनुव्रजद्बन्धुसमाजबन्धुभिः ॥४८॥
ततः प्रसूने च फले च मञ्जुले
निवेश्य देश्ये वनपालपुङ्गवे ।
नृनाथसभ्येभ्यपटाश्रयान्तरं
विनीयमानेऽत्र चरैर्मुदोऽभवन् ॥४९॥
कृतप्रसादो घनमालिनाऽवदत्
स सन्मुखस्थाङ्गुलिना जनाधिपः ।
निवेदिते पुष्पफलादिवस्तुनि
सुनिश्चलं तिष्ठ सुतुष्टचेतसा ॥५०॥
विदेशजैः पुष्पफलादि सादरं
मनःप्रसादाय विदायलिप्सया ।
निवेद्यमानं वनपालपाणिना
प्रपद्य भूपैर्मुमुदे पदे पदे ॥५१॥
विवेकिलोकैः कृतकेलिकर्मभि-
र्विलोक्य लोकंपृणतागुणे स्तुते ।
महाजनश्चारुसभाजनाश्रितो
व्यलोकयत् काननकामनीयकम् ॥५२॥

फलानि पुष्पाणि च पल्लवे करे
समं समादाय जने परस्परम् ।
प्रसर्पति प्रीतिमना महामना
अमन्यतास्मिन् समये स्वधन्यताम् ॥५३॥

न याऽजनिष्टाऽप्यनयाऽजनिष्टया
वयोऽतिपातोद्गतवातवेपिते ।
पुरा जने नीतिरयं पुरा धृता-
वयोऽतिपातोद्गतवातवेपिते ॥५४॥

नृणां क्रियाऽस्मिन् शिबिरे पुरीप्रिया
क्रयादिकाऽभूदधिकाप्यनेकशः ।
स्थितैः समादाय महर्षिवार्धका-
नुगैर्जनैर्वस्तु विसिष्मिये ततः ॥५५॥

यदत्र तन्त्रे विषयान्तरागते
स्वसज्जने तथ्यमकार्पुरुत्तमाः ।

---

१ आत्मनो धन्यताम् । २ अनया पुरा इयं नीतिर्धृता । कथा, अजनिष्टया=परमेश्वरकृतसंतोषेण या नीतिः पुरा नाऽजनिष्ट=न जाते । कस्मिन्, वयोति० वृद्धे; तथा वयः=अवस्था तस्या अतिपातः=अतिशयस्तेन उद्गतं=नष्टं वातवेपितं यस्मात् तस्मिन् यूनि,-यद्वा, अप्रश्लेषात् अवयोऽतिपातोद्गतवातवेपिते ।

फलैः प्रसूनैर्बहुमानमादराद्
वने तदातिथ्यमशिक्षि शाखिभिः ॥५६॥
विनिद्रपत्रालिगतालिकैतवाद्
व्रजैरुतापीयत सोमजं नृणाम् ।
तदप्यभूदुन्मदसंपदेऽपदे-
ऽप्यहो महाविभ्रमकारणं धियाम् ॥५७॥
चतुर्दिगन्तेषु जयात् ससाधनं
मृगाङ्कचूडामणिवर्जनार्जितम् ।
धनं विरेजे शिबिरे चयीकृतं
सुराचलस्पर्धनयाऽनयाश्रितम् ॥५८॥
प्रभोर्भयाद् वैरिकदम्बकं बकं
धिया गुरूकृत्य विलक्षमानने ।
दधानमाशासु चरिष्णु दुर्यशः

---

१ विकस्वरपत्रश्रेणिपूर्णा या अलिः=सुरा तस्याः कपटात् "अलिः सुरामधुलिहोः" इत्यनेकार्थः, चन्द्रहासमद्यभ्रमात् सोमजं=दुग्धं पीतम् । २ सोमाज्जातं विशेषेण भ्रमकारणं स्यात् "शीतकरश्चरस्तपस्वी च" इति ज्योतिर्विदः । मृगः अङ्के यस्य मृगाङ्कः पञ्चमचक्री जिनः तं चूडामणौ वरयतीति क्विपि मृगाङ्कचूडामणिवर् स चासौ जिनः सेनान्यादिस्तेन अर्जितम् ।

पयोधिरोधः खलु संनिधौ दधौ ॥५९॥
वने चरन् सानुचरः पयोरुहां
परागभागैरिव पूजितोऽम्बरे ।
[1] जिनेश्वरः पञ्चमचक्रिपञ्चमः
स कौतुकी तत्र ददर्श केतकम् ॥६०॥
वियोगभाजां हृदि कण्टकैः कटुः
पटुः स्मरायोधनसाधने भटः ।
त्वदीयपत्रं मदनेन दिग्जये
निधीयते [2] तार्किकवादिनाऽऽदितः ॥६१॥
अलं दलं त्वं युगपज्जगज्जये
निधीयसे कर्णिशरः स्मरेण यत् ।
ततः कृतं तत् करपत्रदारुणं
वियोगिनां हृद्दलनात् सनाऽन्वितम् [3] ॥६२॥
यदा हनिष्यत्यमुना स्मरश्चरन्
प्रपद्य वैरं किमिति स्मरन् हरः ।
ततो दुराकर्षतया [4] तदन्तकृद्

१ "पञ्चमो रुचिरे पक्षे" इत्यनेकार्थः । २ यथा तार्किकवादी आदितः पत्रं निदधाति । ३ 'दलम्' इति तव नाम अन्वितं= यथार्थमित्यर्थः । ४ तस्य स्मरस्य अन्तकृत् ।

न्यवारयत् केतक ! चेतसा त्वकाम् ॥६३॥
दधासि पत्रं करपत्रकैतवात्
समार्दवत्वेऽपि जनार्दनोचितम् ।
कृतालिपानं तत एव सेवनाद्
विगीयसे मन्मथदेहदाहिना ॥६४॥
त्वदग्रसूच्या सचिवेन कामिनो-
र्मनोयुगं योजयते मनोभवः ।
भवेत्तदाश्लेषविशेषणे नयाद्
न शीतभीतिर्नववाससीव सा ॥६५॥
त्वयि प्रपन्ने तरुणस्य योषितां
मनोभवः सीव्यति दुर्यशःपटौ ।
प्रसह्य संकेतपदेऽपि केतनं
त्वमेव तत्केतकवाग्निकेतनम् ॥६६॥
करेऽधिकुर्यात् तव पत्रमेव यो
धृतिः सपत्रा-कृतिमेति तस्य यत् ।

---

१ धृति=धैर्यं दुःखम् एति=कम्पते चलतीति यावत् । यद्वा धृतिः=धैर्यं सपत्रा=सपदा=सवाहना कृतिं=प्रयत्नम्=उद्यमं प्राप्नोति=चलनायोद्यतं भवतीत्यर्थः । वियोगकारिसंबन्धे=विशिष्टयोगवतां सङ्गेऽपि, अपरस्य मोहो=मूर्च्छा, अपगतः रमायाः=लक्ष्म्याः ऊहो=विमर्शः, यद्वा, परे=परमात्मनि मोहं कुरुतेति वा ।

स्फुटं च पत्रैः करपत्रमूर्त्तिभि-
वियोगियोगे-परमोहकृत् त्वकम् ॥६७॥
फलं न सुस्वादु दलं सधूलिकं
तवास्ति वापल्लव एव चादरः ।
विना फलं केतक ! केन पशुवद्
वियोगिहृद्दारुणि दारुणायसे ? ॥६८॥
धनुर्मधुस्विन्नकरोऽपि भीमजा-
प्रियं परागैरनुरागमुन्नयन् ।
मनो हिनस्त्येव हि नास्तिरोभवन्
मनोभवः स्वाश्रयभित् कृशानुवत् ॥६९॥
मुनेर्मनोऽवामनकामनाशने
परं परागैस्तव धूलिहस्तयन् ।
स्मरः स्मरन् विश्वजयं शरैर्व्यधाद्
व्यथान्वितं धिग् मुनिघातपातकम् ॥७०॥
रतिप्रसक्तं तदसक्तमाशये-
ऽप्यसंशयं नः सकलं चलं बलात् ।

---

१ आपल्लव एव आदरः । २ अवामनः=लम्बः ।

प्रसूनधन्वा शरसात् करोति मां[1]
विमुच्य रुच्योपशमस्य चेतसि ॥७१॥
उदीर्य वीर्यादतिविप्रियं वशे
निधित्सता शान्तरसाख्यमानसम् ।
प्रपद्य वेलां समिते[2]र्हृतारते-
रिति क्रुधाऽकुश्यत तेन कैतकम् ॥७२॥
विदर्भसुभ्रूस्तनतुङ्गतासये
तपस्यतोऽद्रीन् नृपतिर्व्यतिव्रजन् ।
ततः प्रयाणात् तदुपत्यकाश्रये
जहार तुङ्गत्वमदं पटालयैः ॥७३॥
प्रतिस्थलं तत्र गजान् समुन्मिल-
द्घटानिवापश्यदलं तपस्यतः ।
स्वकुम्भयोस्तत्कुचशोभयाऽभयं
तथैव धित्सून् शिरसा नमस्यतः ॥७४॥
विभुर्वनातिक्रमणे स चक्रभृत्
क्वचिद् घटान् वै[3]क्षत संतपस्यतः ।

१ 'मा' इति मां विमुच्य=त्यक्त्वा चेतस्युपशमस्य रुच्या ।
२ समितिः=युद्धम्, पक्षे यतिसमितिः । ३ वाशब्द इवार्थे ।

फलानि धूमस्य धयानधोमुखान्
कुचोपमाप्त्यै पथि दाडिमागमे ॥७५॥
[1]कपालिनः क्वापि कपालिपालिता-
सनास्थितानैक्ष्य तदाकृतेस्तुलाम् ।
अदीधरद् वीरतया फलान्विते
स दाडिमे दोहदधूपिनि द्रुमे ॥७६॥
वियोगिनीमैक्षत दाडिमीमसौ
तपस्तपन्तीं बहुलातपे [2]तपे ।
समुद्गिरन्तीं करुणाऽरुणास्रवं
पदे तदासेविभिरीहितं रसम् ॥७७॥
वनेचरीं कामपि तद्भटैर्धृतां
प्रियस्मृतेः स्पष्टमुदीतकण्टकाम् ।
त्रसन्मृगाक्षीमचिरादमोचय-
ल्लतामिवायं गिरिजां रजोन्विताम् ॥७८॥
शिशूनपि स्वान् सममोचयद् नृपं
कृपाप्रपारूपमुपेत्य सत्यगीः ।

---

१ कपालिनः=संन्यासिविशेषान् ऐक्ष्य=दृष्ट्वा ता आकृते-स्तुलां=तुल्यतां दाडिमद्रुमेऽदीधरत् । २ तपस्यतौ ।

फलस्तनस्थानविदीर्णरागिहृ-
न्निदर्शनात् सा सृजती तदाशिषम् ॥७९॥
अभिक्रमे भीमसुतां वियोजितां
श्रियाऽथ सस्मार सुराङ्गनाजितम् ।
नृपश्चलन् वीक्ष्य लतां फलान्तराद्
विशङ्कुकास्यस्मरकिंशुकाशुगाम् ॥८०॥
स्मरार्धचन्द्रेषुनिभे कृशीयसां
समापतत्पान्थनृणां कदम्बके ।
प्रभुः पलाशे तुलनामदीदृशद्
गलज्जरद्वास्त्रितपत्त्रसंकरे ॥८१॥
वियुक्ततापत्त्रधनैर्विनाशने
स्फुटं पलाशेऽध्वजुषां पलाशनात् ।

---

१ "अभिक्रमो रणे यानमभीतस्य रिपून् प्रति"।
२ युजं=समसंख्यतां मुक्त्वा प्रवृत्तिर्वियुक् तादृशी तता=विस्तीर्णा आपत् तस्यास्त्रायन्ते ईदृग्धनैर्विनाशने सति; पलाशे पत्त्रत्रयात्, वियुक्तता=पतियोगः, पत्त्राणि च, ततो द्वन्द्वः, तद्रूपधनैः, पक्षे वियुक्तं=विरहः तस्य तापं त्रायते, यद्वा, विरहरूपा आपत् तां त्रायन्ते ईदृग्धनैर्विना अशने=भोजने सत्यपि अध्वजुषां=मार्गसेविनाम् ।

मुखेऽपि मालिन्यदशा ह्यमन्यता-
ऽमुनोचिता पातकचिन्तयाऽध्वनि ॥८२॥
स किंशुकः किंशुकवक्त्रतुल्यतां
धरेद्धिपत्नीभवनादिति स्मरन् ।
सवृन्तमालोकत खण्डमन्वितं
विशङ्कमुद्यत्सुमनः सुवर्णरुक् ॥८३॥
कचित् पुनः शाल्मलिशालमालिनि
शिलोच्चये राजपथावरोधिनि ।
ददर्श भूपः सुमनोनिबन्धनं
वियोगिहृत्खण्डिनि कालखण्डजम् ॥८४॥
नवोलतागन्धवहेन चुम्बिता
जिनेशपादा युवराजताभृता ।
समीयुषा स्वाङ्गभुवा श्रणेमुषा
गजाश्ववृन्देन समं समङ्गलम् ॥८५॥
प्रिया तदीया जननी नृपेण सा
करम्बिताङ्गी मकरन्दसीकरैः ।

१ बाल्यावस्थाया गन्धो लेशस्तं वहति न=पूर्णेत्यर्थः, नञ्प्रतिरूपकेण 'न' इत्यव्ययेन समासः ।

समालिलिङ्गे शुचिवासरे रसं
प्रकाशयन्ती गिरिजेव तापमुक् ॥८६॥
लतेव तन्वी विभुविप्रयोगतः
प्रतापमेवादिशतीं नवोदयम् ।
दृशा नृपेण स्मितशोभिकुड्मला
भृशाऽङ्कुशारूढरतिर्न्यपीयत ॥८७॥
अदम्भसंरम्भविमुक्तमानसा
न सा प्रियं प्राप्य न विप्रिये प्रिया ।
नृपेण सर्वा प्रमदा मदालसा
दरादराभ्यां दरकम्पिनी पपे ॥८८॥
विचिन्वतीः पान्थपतङ्गहिंसनै-
र्विना शुभान्यग्रगताः प्रकाशिकाः ।
निशि व्यधुः स्वालयसंमुखोत्सुक-
प्रयाणयोगादपि दीपिका भटाः ॥८९॥
घटा गजानां मदसंकटैः कटै-
रपुण्यकर्माण्यलिकज्जलच्छलात् ।
निदर्शयन्ती बहुधागमोदित-

प्रभञ्जनान्मग्नवपुः सरस्यभूत् ॥९०॥
सहेत न कापि स हेमपुष्पकः
कलङ्कपङ्कं मधुपोज्झितस्ततः ।
व्यलोकयच्चम्पककोरकावली-
र्नृपः पथि क्वापि सुवर्णभास्वराः ॥९१॥
[1]अहर्पतेर्दर्पभरात् प्रसर्पति
प्रभाभरे भूमिभुजां महोदये ।
ददर्श ताराः पतनोन्मुखाः प्रगे
स-[2]संवरारेर्बलिदीपिका इव ॥९२॥
अमन्यतासौ कुसुमेषु संभवं
जिनोऽपरागः स परागमाश्रयन् ।
दिशां जयाल्लोहितचन्दनेज्यया
कृतां रुचिं पद्मनिवासिपद्मया ॥९३॥
क्वचित् सरोऽन्तर्जलकेलिकर्मणि

---

१ अहर्पतेर्महोदये सति दर्पभराद् भूमिभुजां राज्ञां प्रभाभरे प्रसर्पति सति; यद्वा, अहर्पते: प्रभाभरे भूमिभृतां=पर्वतानां महोदये प्रसर्पति सति । २ संवरारे:=कन्दर्पस्य: पक्षे सर्वं वस्तु संवृण्वन् ससंवर:=सर्वत्यागी अरि:=शत्रु:, तदा 'स' इति पदमध्याहार्यम् । रात्रिभागे दीपान् कृत्वा अनश्यत् ।

परागमन्धंकरणं वियोगिनाम् ।
तदप्यभूद् राज्ञि सुवर्णवर्णित-
तनूत्विषां नूनमनूनवृद्धये ॥९४॥
वॅनेचरेणापि वनेऽत्र पत्रिणि
फलाढ्यपुष्पैस्तदधानि तज्जनः ।
स्मरेण मुक्तेषु पुरा पुरारये
शरेषु लेभे विफला क्रिया यतः ॥९५॥
वने चरच्चारुचमूचराशुग-
स्थले बभौ पुष्परजोव्रजः क्वचित् ।
हृदि ज्वलत्काममहानलार्चिष-
स्तदॆङ्गभस्मेव शरेषु संगतम् ॥९६॥
पिकाद् वने शृण्वति भृङ्गहुङ्कृतैः
स्फुट भटानां वचनानुवादिभिः ।
जयारवोद्घोपणमेव चक्रिणो
जनोऽनॆंजन्यस्तदमन्यताध्वगः ॥९७॥

---

१ वनेचरेण स्मरेण सैनिकः फलाढ्यपुष्पैः अधानि, केवलेषु शरेषु मुक्तेषु क्रिया विफला लेभे । फलमत्र शस्त्राग्ररूपम् अनेकार्थकोशे च प्रसिद्धम् । २ कामाग्नेर्भस्मेव । ३ अजन्येन=उत्पातेन रहितः ।

स्वसैनिकानां नृपतिः स्वमानसे
दशामुदञ्चत्करुणो वियोगिनाम् ।
निधाय चाज्ञापयदागमं पुन-
र्निजावरोधस्य परस्परेच्छया ॥९८॥

नृपाज्ञयाऽऽमन्त्रितकामिनीजने
पुरस्तथान्वागमने मनस्विनाम् ।
अनास्थया सूनकरप्रसारिणीं
स्त्रियं श्रमेणानुनिनाय कश्चन ॥९९॥

चलन् नृपादेशनिवेशपेशलः
पुरः स्वसेनान्वयतो नृपो गुणैः ।
स्वगेहमाप्यापि वियोगिनीं प्रियां
ददर्श दूनः स्थलपद्मिनीं नलः ॥१००॥

रसालसालः समदृश्यताऽमुना
स्वदेशजन्मा वसुधातपत्रितः ।
सृजन् दलैस्तोरणधोरणीं चलैः
फलैः पुनर्न्युञ्छनकर्म शर्मणे ॥१०१॥

---

१ स्थलपद्मिनीव स्थलपद्मिनी, लुप्तोपमा । २ गुणैः कृत्वा नरः=अर्जुनः कृष्णो वा; यद्वा, नल इव नलः, इयमपि लुप्तोपमैव ।

परागमन्धंकरणं वियोगिनाम् ।
तदप्यभूद् राज्ञि सुवर्णवर्णित-
तनूत्विषां नूनमनूनवृद्धये ॥९४॥
वनेचरेण[1]ापि वनेऽत्र पत्रिणि
फलाढ्यपुष्पैस्तदघानि तज्जनः ।
स्मरेण मुक्तेषु पुरा पुरारये
शरेषु लेभे विफला क्रिया यतः ॥९५॥
वने चरच्चारुचमूचराशुग-
स्थले बभौ पुष्परजोव्रजः क्वचित् ।
हृदि ज्वलत्काममहानलार्चिष-
स्तदङ्गभस्मेव[2] शरेषु संगतम् ॥९६॥
पिकाद् वने शृण्वति भृङ्गहुङ्कृतैः
स्फुटं भटानां वचनानुवादिभिः ।
जयारवोद्घोषणमेव चक्रिणो
जनोऽनजन्य[3]स्तदमन्यताध्वगः ॥९७॥

---

१ वनेचरेण स्मरेण सैनिकः फलाढ्यपुष्पैः अघानि, केवलेषु शरेषु मुक्तेषु क्रिया विफला लेभे। फलमत्र शस्त्राग्ररूपम् अनेकार्थकोशे च प्रसिद्धम्। २ कामाग्नेर्भस्मेव। ३ अजन्येन=उत्पातेन रहितः।

स्वसैनिकानां नृपतिः स्वमानसे
दशामुदञ्चत्करुणो वियोगिनाम् ।
निधाय चाज्ञापयदागमं पुन-
र्निजावरोधस्य परस्परेच्छया ॥९८॥

नृपाज्ञयाऽऽमन्त्रितकामिनीजने
पुरस्तथान्वागमने मनस्विनाम् ।
अनास्थया सूनकरप्रसारिणीं
स्त्रियं श्रमेणानुनिनाय कश्चन ॥९९॥

चलन् नृपादेशनिवेशपेशलः
पुरः स्वसेनान्वयतो नृपो गुणैः ।
स्वगेहमाप्यापि वियोगिनीं प्रियां
ददर्श दूनः स्थलपद्मिनीं नलः ॥१००॥

रसालसालः समदृश्यताऽमुना
स्वदेशजन्मा वसुधातपत्रितः ।
सृजन् दलैस्तोरणधोरणीं चलैः
फलैः पुनर्न्युञ्छनकर्म शर्मणे ॥१०१॥

---

१ स्थलपद्मिनीव स्थलपद्मिनी, लुप्तोपमा । २ गुणैः कृत्वा नरः=अर्जुनः कृष्णो वा;यद्वा, नल इव नलः,इयमपि लुप्तोपमैव ।

जगर्ज गर्जेषु मणिर्मदोत्कटः
स्फुरद्द्विरेफारवरोषहुंकृतिः ।
स्पृशंश्च सत्तावयवैर्भुवं जयै-
र्दिशां गजानामिव साङ्गजाश्रियाम् ॥१०२॥
समुच्छ्रिते चाम्रतरौ समीपगे
ध्वजे महेन्द्रस्य चलोच्चकेतनैः ।
समीरलोलैर्मुकुलैर्वियोगिने-
हितः स्वलोकाय सुखाकरोद् नृपः ॥१०३॥
वियत्युदीयाय जिनेशचक्रिणः
सदानुयानादिव चक्रकैतवात् ।
अनीतिनिष्ठाय नु चक्रबान्धवो
जनाय दित्सन्निव तर्जनीभियम् ॥१०४॥
दिने दिने त्वं तनुरेधि रेऽधिकं
मणे ! करस्पर्शनो ममेति सः ।
निजातपत्राय जगत्त्रयीविभु-

१ गर्जेषु=गजेषु मणिः=रत्नमित्यर्थः । २ दिक्करिणां विजयैः । ३ अङ्गलक्ष्म्या सहितानाम् । ४ स्वदेशलोकेन बहुकालं वियोगिना ईहितः=वाञ्छितः । ५ सूर्यः ।

नृणां विपत्त्राय[1] ददौ प्रभाभरम्[2] ॥१०५॥

कृपाणरत्नं[3] कृपणे कृपाधनं
पुनः पुनर्मूर्च्छ च तापमृच्छ च ।
द्विषे मिषेण स्वकराङ्करस्य य-
दितीव नित्यं समुपादिशत्प्रभोः ॥१०६॥

धृतं पदं वार्धकिरत्नयत्नतो
मृषाऽकरोद् भूरिकृतोपभोगदम्[4] ।
इतीव[5] पान्थं शपतः पिकान् द्विजान्
क यासि हित्वा वनितानितान्तमुक् ॥१०७॥

यथेष्टदानेन विशिष्टशिष्टधीः
स्वसैन्यजन्ये शिविरे प्रपापदे[6] ।

---

१ विपदस्त्रायत इति विपत्त्रं तस्मै । २ स्वोपरिधरणेन छत्राय प्रभादानं, स्वप्रभाया आधिक्यात् । ३ कृपाणरत्नं कृपणे=दीने कृपाधनं=कृपामयम्; द्विषे=रिपवे त्वं मूर्च्छ तापं वा ऋच्छ=प्राप्नुहि, इत्युपादिदेशेव । ४ किं० पदं, भूरिणा=स्वर्णेन कृता ये उपभोगास्तेषां दायकम् । ५ 'हे पान्थ ! त्वं वनितानितान्तमुक् क्व यासि ?' इति पान्थं शपतः पिकान् वा द्विजान्=गमनवारकदैवज्ञांश्च वार्धकिकृतं पदं=स्थानं मृषाऽकरोत्; किमर्थं वारणं क्रियते, स्थानलोभादेव न यास्यतीति भावः । ६ सः=राजा शिविरे प्रपायाः स्थाने पथिकान् कयापि रीत्या दैन्यतः सखेदं यथा स्यात्तथा लोहितेक्षणान् न पेक्षिष्ट ।

कयापि रीत्या पथिकान्न दैन्यतः
सखेदमैक्षिष्ट स लोहितेक्षणान् ॥१०८॥
अलिस्रजा कुड्मलमुच्चशेखरं
निरीक्ष्य मेने ह्यमुनाऽपि चक्रिणा ।
द्रुमेऽपि दानातिशयः फलोदय-
श्रिये पुनः किं पुरुषे सचेतसि ? ॥१०९॥
अलिस्रजा कुड्मलमुच्चशेखरं
श्रिया जयच्चर्म मणिं नृणां मणिः ।
दधार धाराधरधारणे रणे
क्षमं गुरु द्वादशयोजनप्रमम् ॥
वनं घनच्छायमिहाग्रतोऽग्रहीद्
निपीय चाम्पेयमधीरया धिया ।
मणिः पुरोधा अवरोधसङ्गतं
स्वकान्तकान्तागमनात् स्मरं गतः ॥११०॥
अखण्डदण्डं महसाऽभिपिण्डितं
सुवर्णवर्णांशुककेतुमण्डितम् ।

---

१ धाराधरो=मेघः कृपाणश्च; कृपाणस्य धारणं यस्मिन् रणे; अथवा रणे मेघस्य धारणे समर्थं चर्ममणिं दधार ।

स धूमकेतुं विपदे वियोगिना-
मजीगणद् नाशयितुं गणं द्विपाम् ॥१११॥

हृदः[1] पयोधेः स गभीरताभृतः
समुच्छलत्स्वच्छमहामहोमणिम् ।
स्वतेजसां बीजमिव द्युतिं नय-
दुदीतमातङ्कितवानशङ्कत ॥११२॥

गलत्[3]परागं भ्रमिभङ्गिभिः पत-
च्धृतालिदूरीकरणेऽब्जमावहन् ।
स काकिणीरत्नसयत्नपाणिना
रराज राजन्यजयी कृपाणिना ॥११३॥

नृपेण[4] चक्रे ह्यवनीवनी पुरं
प्रसक्तभृङ्गावलिनागकेसरम् ।

---

१ हृदयसमुद्रात् उदितं=उत्थितम् । २ आतङ्कितं=मरुजध्वनितं अस्यास्तीति नित्ययोगे मतुप् "आतङ्को रुजि शङ्कायां संतापे मरुजध्वनौ" इत्यनेकार्थः । ३ स=राजा रराज । किं कुर्वन्, काकिणीरत्ने सयत्नो यः पाणिस्तेन कमलं दधन् । किं० अब्जम्, गलत्परागम्; पूर्वं पतन्तः पश्चाद् धृता ये अलयो=भृङ्गास्तन्पराकरणे । ४ नृपेण अवन्यां=भूमौ या वनी=वनराजी सा पुरं चक्रे । प्रसक्तेति० प्रसक्तानि भृङ्गावलिनागकेसराणि यत्र तत् । भृङ्गादयः ओपधिविशेषाः ।

र्व्यधायि तस्मिन्नभिषेचनान्नृपै-
र्महोत्सवो द्वादशवार्षिकोऽन्वहम् ॥११४॥
जने वधूनां लसदञ्जने दृशि
परस्परेणाभिनये तदुत्सवे ।
स भारनाराचनिघर्षणस्खल-
त्क्षतारणैराभरणैरमन्यत ॥११५॥
न वीतरागस्य रतौ नवाऽरता-
वनामनस्यं मन एव तज्जनः ।
अवीतरागस्य तु वीतरागता-
ज्वलत्कणं शाणमिव व्यलोकयत् ॥११६॥
कृपालयं पालयतोऽर्हदीशितु-
रवामनं वा मननेन तन्मनः ।

१ आमनस्यं=प्रगाढ दुःखम् । २ "यानमङ्कुशवारणम् । निषादिनां पादकर्म यतं वीतं तु तद्द्वयम्" (अ० चि० ४, २९७)। ३ "वीतं फल्गुहयद्विपम्" (अ० चि० ४, ३१४) तत्र रागभावरूप एव ज्वलन्=दीप्यमानः कणो=अंशो यत्र तत् । वीता रागभावरूपा ज्वलत्कणा यस्माद् वा । "कणो धान्यांशलेशयोः" "शाणः कपे मानभेदे" इत्यनेकार्थः । ४ अवामनं=पटुतरम्, वान्तिरहितं वा । ५ ज्ञानेन ।

[1]जगत्परं पौरजनो [2]जगद्भुजि-
उज्ज्वलत्कणं [3]शाणमिव व्यलोकयत् ॥

गच्छाधीश्वरहीरहीरविजया-
म्नाये निकाये धियां
भृत्यः श्रीविजयप्रभाख्यसुगुरोः
श्रीमत्तपाख्ये गणे ।
शिष्यः प्राज्ञमणेः कृपादिविजय-
स्याशास्यमानाग्रणी-
श्चक्रे वाचकनाममेघविजयः
शस्यां समस्यामिमाम् ॥११७॥

इति श्रीनैषधीयमहाकाव्यसमस्यायां महोपाध्यायश्रीमेघविजयगणि-
पूरितायां तृतीयः सर्गः संपूर्णः ॥ श्रीः ॥



१ जगत् पालयतः । २ जगतो भुजिर्भोजनं तत्र ज्वलन्तः कणा यस्मिन्, बहुभोजने बहुपाक एव वरमिति । ३ पौरजनः अर्हन्मनः साणं=सशब्दमिव ददर्श, पुनः पुनर्भोजनादेशात् । ४ नैषधीय० ६२ श्लोकः ।

## ॥ अथ चतुर्थः सर्गः ॥

तदङ्गमुद्दिश्य सुगन्धिपातुका
महौषधिप्राप्तरसा रसाधिकाः ।
अपः प्रपद्याम्बुनिधेरधैर्यता-
ऽजनिष्ट मृष्टाऽन्यपयोनिधेर्भिया ॥१॥

कृतेऽभिषेके नृपरूपभादृशः
शिलीमुखालीः कुसुमाद् गुणस्पृशः ।
स्त्रियः समुद्दिश्य मनोभवोऽमुचत्
समं रसावेशवशां दशां गताः ॥२॥

कुतूहलेऽस्मिन् जनराजिसंकुले
मिलच्चलाक्षीजनलक्षवीक्षणात् ।
स्वचापदुर्निर्गतमार्गणभ्रमाद्
न कस्य हास्याय भटा विलक्षिताः ? ॥३॥

सुराङ्गनाः स्वामिगुणाङ्गनाटने

---

१. चक्रिणोऽभिषेके अपः=पानीयानि प्रपद्य=आश्रित्य समुद्रस्य अधैर्यता अजनिष्ट मृष्टः पयोनिधिरन्योऽभूदिति भिया ।

स्वरागभागात् कृतशूरपूरणे ।
निजप्रियां मौनरुचिं रतिं स्मरन्
स्मरः स्वनन्तीरवलोक्य लज्जितः ॥४॥
मरुल्ललत्पल्लवकण्टकैः क्षतं
वनेषु पात्रं न पुनर्जनेषु तत् ।
जिने दिनेशेऽभ्युदितेऽवरोधनं
वधूजनेष्वेव न पूर्जने मनाक् ॥५॥
जिनेऽभिषिक्तेऽनुपदं तदङ्गने
समुच्चरच्चन्दनसारसौरभम् ।
वनं बभूवाऽऽगतदृग्गुणप्रम-
सहस्रदेशेशकृतैर्महोत्सवैः ॥६॥
विशुद्धमुक्ताभरणाद् गुणान्वितं

---

१ "रतौ मौनम्" इति नीतिशास्त्रम । २ "पात्रं तु कूलयोर्मध्ये पर्णे नृपतिमन्त्रिणि । योग्यभोजनयोर्यज्ञभाण्डे नाट्यानुकर्त्तरि" इत्यनेकार्थः । ३ पात्रम् । ४ पूजायाम् । ५ दृक्शब्देन द्वयं, गुणाऽग्नयः, एवं द्वात्रिंशत्सहस्रराजभिः । ६ पद्मपक्षे विभिः=पक्षिभिः शुद्धं=शोधितम्; पक्षे मुक्ता=त्यक्ता आभा यत्र ईदृशाद् रणात्=संग्रामात् । ७ गुणः=मौर्वी तदन्वितम् ।

सदो[1]न्नतं का[2]ममलीनताश्रयम् ।
स वारनारीकुचसंचितोपमं
शमेन मेने प्रभुतापदं प्रभुः ॥७॥
य[3]तः प्रिया सा-[4]नु-मति-क्रियोचिता
धृताऽमुना पीतरसानुगामिनी ।
पुरो निधायेति जनोऽत्र चक्रिणं
ददर्श मा[5]लूरफलं पचेलिमम् ॥८॥
युवद्वयीचित्तनिमज्जनोचितं
स्थलं बभूवोत्सवतः सरःसमम् ।
समुच्छलत्तुङ्गतरङ्गवीचिभि-
र्मरुत्प्रयुक्ताम्बुकणाभमौक्तिकैः ॥९॥
जिनेशभीतस्मरपाणितः पत-

१ उन्नतं=साहंकारम् । २ कुचौ मलीनताश्रयौ, चूचुके श्यामत्वात्, पक्षे कामः=स्मरः, लोभो वा तस्य मलीनताश्रयं; यद्वा, कामम्=अत्यर्थम्, अलीनताश्रयं=क्वापि न लीनम्=चञ्चलमिति यावत् । ३ यस्मात् मालूरफलात् । ४ साऽनुमतिशीले प्रिया क्रिया=क्रीडादिः अमुना राज्ञा धृता; पक्षे नु=वितर्के, सा=प्रसिद्धा उचिता मतिक्रिया=बुद्धिकार्यं राज्ञां वर्धन-विद्यादानादि धृता; तृतीयपक्षे प्रिया=मैत्री अनुमतिक्रियया सहिताऽनुगामिनी सार्थे धृता । ५ मालूरः=श्रीफलः ।

रप्रसूनशून्येतरगर्भगह्वरम् ।
घनं तदुच्चैर्भवनं सभावनं
दिशो दशामोदभरैरपूपुपत् ॥१०॥
हरेण वैरे कविना व्यनीयत
सिसृक्षया तद्विजयैषिणाऽङ्गजः ।
स्मरेषुधीकृत्य धियाऽभयाधयाः
पदौ प्रभोराश्रय तज्जयश्रियः ॥११॥
पुरीव पूर्वापणरत्नबिम्बितं
प्रतीच्यभागस्थितमर्जुनान्वितम् ।
वणिग्मणिर्वीक्ष्य हृतार्थशङ्कया
स पाटलायाः स्तवकं प्रकम्पितः ॥१२॥
मुनिद्रुमः कोरकितः सितद्युति-
स्तदुत्सवेऽभ्यागतकामिनीमुखैः ।

---

१ हे स्मर ! त्वं प्रभोः पादौ इषुधीकृत्य=इषवः=बाणाः अधिकारात् प्रसूनानि ते धीयन्तेऽस्मिन्निति इषुधिस्तं कृत्वा आश्रय=सेवस्व=कुसुमाञ्जलिधारणादिना पूजयेत्यर्थः, इति कविना अङ्गजः व्यनीयत=शिक्षां प्रापितः, सिसृक्षया=जगतो निर्माणेच्छया । किं० कविना, तस्य स्मरस्य विजयैषिणा । किंवि० जयश्रियः, अभयम् आ=समन्ताद् धयन्तीति अभयाधयाः ।

स्फुरद्विभूषाङ्गमयूखसंमुखै-
र्वनेऽपि मेने सुमनोभिरन्वहम् ॥१३॥
उपायनैः श्याममणीर्गिरिजैर्नै-
र्वनेऽमुनाऽमन्यत सिंहिकासुतः ।
विलोक्य कान्तामिह राजमण्डलीं
स्वमार्गभेदानुगमात् सचेतसा ॥१४॥
बभौ तदा रात्रिपदेऽप्यहः सुकृ-
न्महो द्विधाप्याहवनैर्हविर्भुजाम् ।
तमिस्रपक्षं [2]त्रुटिकूटभक्षितं
[3]तमेव धूमभ्रमतोऽपि दूरयत् ॥१५॥
नरः क्षणे कुत्रचिदेव पुत्रिका-
कदम्बकं विभ्रमभावितात्मकम् ।
ददर्श लोकः स्वयमेव नर्त्तने
कलाकलापं किल [4]वैधवं वमन् ॥१६॥

---

१ पण्डितेन । २ नाशकपटेन भक्षितम् । ३ तमेव तमिस्रपक्षं =नमोभर पक्षशब्देन बलम् अनेकार्थे । ४ "विधुश्चन्द्रेऽच्युते धीकल्पनायां विटपेऽपि च" इत्यनेकार्थः, ततो वैधव=अच्युतसं-बन्धिनम् ।

अथ प्रवृत्ते स महे महाशयः
पणाङ्गनास्ता नररूपधारिणः ।
पुरप्रवेशे नटयन् ययौ स्वयं
कलाकलापं किल वैधवं वमन् ॥
पुरो हठात् क्षिप्ततुषारपाण्डुर-
च्छदावृतं गोपुरमस्य चाक्रिणः ।
प्रवेशयोगेऽप्यरुचत् सतोरणं
रणद्द्विपाश्वेन समं समन्ततः ॥१७॥
अवाकिरंस्तं सुदृशोऽथ मौक्तिकै-
श्छदावृतेर्वीरुधि बद्धविभ्रमाः ।
पदे पदे पौरगिरा 'जय प्रभो'-
ऽप्युदीरयन्त्यः प्रमदात् तदाशिषः ॥१८॥
चतुष्पथे जग्मुषि राजराजिभि-
र्विभाविभाश्वोदितरेणवो नृणाम् ।
मिलन्निमीलं ससृजुर्विलोकिता
न चक्षुरक्षुण्धसमक्षवीक्षणात् ॥१९॥

---

१ समन्ततः=चतुर्दिक्षु ।

पुरन्दरेणापि समीयुषा सुरैः
प्रतिष्ठितास्तुष्टिपरेण वृष्टिभिः ।
स्वकेतनैश्छादयता प्रणेमुषा
नभस्वतस्तं कुसुमेषु केलयः ॥२०॥

गता यदुत्सङ्गतले विशालतां
तनूजपौत्रानुजपुत्रतत्सुताः ।
अलंकृताश्चेभकृताधिरोहणाः
पुरस्सरा रेजुरदःप्रसत्तये ॥२१॥
नमन्ति नूनं विनयेन मेदिनीं
द्रुमाः शिरोभिः फलगौरवेण ताम् ।
नृपोऽप्यतोऽन्तःपुरमाप्य सो नतो-
ऽचिरात् सवित्रीमचिरां चिरागतः ॥२२॥
सलाजराजन्नवमौक्तिकौक्तिका-
शिषां प्रसारैरवरोधसंगताम् ।
कथं न धात्रीमतिमात्रनामितैः
स नाभ्यनन्दद् विभवैः सनाऽमितैः ? ॥२३॥
सभाजनाधीननिलीनचेतसः

सभाजनान् वीक्ष्य विशेषतस्त्रिधा ।
यथार्हमानेन समं विसर्जनैः[1]
स वन्दमानानभिनन्दति स्म तान् ॥२४॥

नृपाय तस्मै हिमितं वनानिलै-
स्तपेऽपि धाराधरयन्त्रवेश्मनि ।
ययावहोरात्रकदम्बकं सुखं
स्वराजधान्यां सततोदयोन्मुखम् ॥२५॥

असौरभेऽप्यत्र ससौरभीभवत्
सुधीकृतं पुष्परसैरहर्महः[2] ।
असौ ससौख्यं समये[3] शुचेरपि[4]
विभासमानो मनसाऽप्यमन्यत ॥२६॥

तपात्यये नन्दिनि तद्दिनं घनै-
र्घनाघनैः श्यामलिते नभस्यपि ।
विनिर्मितं केतकरेणुभिः सितं

---

१ विसर्जनैः=दानैः । २ सुपयतीति पचाद्यच् । ३ सुरभिः =वसन्तः तस्य भावः सौरभं तदभावेऽपि । ४ शुचेः=आषाढस्य, पक्षे शुचेः=सूर्यादपि विभासमानः=विभया असमानः=अतुल्यः ।

स्वतेजसा वाऽनुबभूव सस्मितम् ॥२७॥
यथेष्टकार्यस्य स सर्जनाज्जने
सनिर्भरं निर्भयसंकथे पथे ।
सदैव राजा प्रिययोगिनेऽङ्गिने
वियोगिनेऽदत्त न कौमुदीमुदः ॥२८॥
अयोगभाजोऽपि नृपस्य पश्यता
यथेष्टदानं स्वजनेन मन्त्रणे ।
कृतेऽफलत्कामनया द्युरत्नवत्
स्वसिद्धिदे स्वामिनि नाद्भुताय तत् ॥२९॥
क्वचिज्जलक्रीडनकेऽपि भूभुज-
स्तदेव साक्षादमृतांशुमाननम् ।
निरीक्ष्य युक्ताम्बुजशङ्कयाऽरजा
उपेयुषी राजमरालमण्डली ॥३०॥
कचित्तथाऽसौ मतिशालिमालयो-

१ 'वा' उपमाने । २ पथशब्दोऽकारान्तोऽपि बृहद्वृत्तौ । ३ विशिष्टयोगिने कौमुदीमुदो न अदत्त, इति काकूक्तिः; यद्वा, विरुद्धयोगिने कौमुदीमुदः न अदत्त, नीतिकरत्वात् । ४ इच्छया । ५ स्वस्य=धनस्य सिद्धिदे, वा=अथवा स्वस्य आत्मनः मोक्षदे । ६ अमृतांशुं=जाग्रज्ज्योतिः । ७ अरजाः=निर्मला ।

प्रवीणितस्तत्क्वणनैपुणे गुणे ।
पिकेन रोषारुणचक्षुषा मुहुः
कृताप्यवज्ञा विफला यथाऽभवत् ॥३१॥
दिदृक्षया चन्द्रमसो वनेऽर्हता
न्यपेध्यतेशेन पिकस्वरोऽमुना ।
यतो मृगाङ्कत्वसुहृद्द्विषो रिपुः
कुहूरुताहूयत चन्द्रवैरिणी ॥३२॥
अशोकमर्थान्वितनामताशया
स्वकानने तं निदधे स तन्मये ।
अनुक्रमेणाभ्युचिते ह्यनु क्रमात्
स केवले वोधवले यतोऽनुगः ॥३३॥
पुरारिरूपेऽस्य पुरारिरूपिणो
गताञ्शरण्यं गृहशोचिनोऽध्वगान् ।
चकार चक्री विषयैः प्रतिष्ठिता-

१ परिपाट्या । २ "क्रमः कल्पांह्रिशक्तिषु परिपाट्याम्" इत्यनेकार्थः, क्रमात्=कल्पात्=आचारात् अनु=पश्चात् । ३ पूर्वमस्य दिग्साधने अरिरूपिणस्तान् शरण्यं गतान् संघकीभूतान् विषयैः=देशैः, भोगैर्वा प्रतिष्ठितांश्चकार ।

नशल्यवात्सल्यमतिर्महत्यहो ! ॥३४॥
अमन्यतावन्तमिवैष पल्लवैः
स्वरागयुक्तैः सुरसालमङ्गिनः ।
हितं गिरन्तं त्रिजगद्गुरुं जनो
जिनं विमुक्तः प्रभुशोभया भयात् ॥३५॥
स्वतः प्रशान्तं शतशो मृगीदृशां
निशान्तमाप्तं द्विविधं क्षमाधनम् ।
स्वरूपनिष्ठं वशमाततान ष्ट न
प्रतीष्टकामज्वलदस्त्रजालकम् ॥३६॥
विलासवापीतटवीचिवादना-
दनाविशन्मानसमेनमेनासि ।
रसेन लीलासु मनस्विनीजन-
श्चकार नोद्भूतविकारकारणम् ॥३७॥
मनो मनोभूवशवर्त्ति नाऽभवत्

१ जिनं सुरसालं=कल्पतरुं जनोऽमन्यत पल्लवैर्वाक्यैः प्राणिनः अवन्तम् । २ भयाद् विमुक्तः । ३ स्वयं संबुद्धत्वाद् न गुरूपदेशतः प्रशान्तं=कामाद् निवृत्तम् । निशान्तं=गृहं रात्रिसीमानं वा । क्षमाधन=राजानं शमिनं वा । ४ कामशस्त्रजालकं वशं न आततनिष्ट ।

पिकालिगीतैः शिखिलास्यलाघवात् ।
सरोरुहामोदविनोदतोऽप्यहो
महोदयार्थेऽस्य निलीनतावशात् ॥३८॥
यथाऽऽलये तालविशालयन्त्रज-
ध्वनिश्च गान्धर्वविशेषनर्त्तनात् ।
वनेऽपि तौर्यत्रिकमारराध तं
तथामृदङ्गोदितवेणुवादनात् ॥३९॥
अलीनचेता विषयोपभोगवान्[1]
न-दीनवृत्त्याऽतिगभीरधीरधीः ।
अरीरमत् सा[2]रसनान्विताऽऽलिभिः
क्व भोगमाप्नोति न भाग्यभाग् जनः ? ॥४०॥
तदर्थमध्याप्य जनेन तद्वने
[3]पटूकृता वा भवनेऽपि मा[4]गधाः ।
तमभ्यनन्दन्नवभावभावनैः

१ विषयः=शब्दादिर्देशो वा । २ सा रसना कटिमेखला तत्सहिता आल्यः=स्त्रियाः सख्यः ताभिः, पक्षे सारसनं कवच-विशेषस्तद्युक्तानां श्रेणीभिः । "आली सख्यावलीसेत्वयमपंपु विशदाशये" इत्यनेकार्थः । ३ पण्डिताः कृताः । ४ वन्दिनः ।

स्वकाव्यभाव्यन्वयरञ्जिनं जिनम् ॥४१॥
वनेचरैः सार्धमुपात्तकिंशुकाः
शुका विमुक्ताः पटवस्तमस्तुवन् ।
तथा यशोभिर्विशदीकृताशयै-
र्यथा प्रशस्याः सकृपैर्नृपैरपि ॥४२॥
विभोः[1] स्वशीलश्रुतिशालितालिभिः
समं निवृत्ताः सुरतेऽभिसारिकाः ।
स्वरामृतेनोपजगुश्च सारिका
गृहे गृहे तच्चरितस्य कारिकाः[2] ॥४३॥
सुरानुवृत्त्याऽप्सरसो रसोर्मिभि-
स्तरङ्गिताङ्ग्यः प्रभुवृत्तनर्त्तने ।
विभावयन्ति स्म सुविस्मयं हरे-
स्तथैव तत्पौरुषगायनीकृताः ॥४४॥
इतीष्टगन्धाढ्यमटन्नसौ वनं
वधूतमाधूतमनाः स्वयौवनम् ।
त्रिवर्गसंसर्गनिसर्गसाधुधीः

---

१ विभोः शीलश्रुत्या शालिताः शोभिता या आलयस्ताभिः समम् । २ कारिकाः=श्लोकविशेषाः ।

पुपोष निर्दोषतयैव देवनैः ॥४५॥
निधीयमानो हृदये सुरीजनैः
पिकोपगीतोऽपि शुकैः स्तुतोऽपि च ।
दिदृक्षितः कुण्डलिकामिनीमनो-
रथैरथैष प्रभुराप विष्णुताम् ॥४६॥
सुधाभुजामप्यतिशायिशासनाद्
निषेवितोऽयं वसुधाभुजां गणैः ।
अविन्दताऽऽमोदभरं बहिश्चरं
परं तमध्यात्मभरं दधौ चिरम् ॥४७॥
प्रियत्वमास्थाय च भीमभूमनो-
विनोदासिद्ध्यै विषयेष्वरज्यत ।
धियाऽमुनाऽमानि सुखं भवेऽभव-
द्विदर्भसुभ्रूविरहेण नान्तरम् ॥४८॥
करेण मीनं निजकेतनं दधत्
स्मरः स्वरूपोपमया तमाश्रयत् ।
ततो रिरंसुः सुहृदा यथेच्छया

१ देवनैः=रमणैः । २ न भवन् विदर्भसुभ्रूविरहो यस्य तेन ।

वने दिदीपे स मधुर्मधुव्रतैः ॥४९॥
पवित्रितोऽसावृपिकुल्यया लयाद्
द्रुमालवालाम्बुनिवेशशङ्कया ।
सुसौरभासानु-गतोऽथ तापसे
द्विधापि संतापनतापमादधौ ॥५०॥
मधुव्रतज्याजुषि पुष्पकार्मुके
निधीयमानेऽथ खगे युगेषुणा ।
व्यतर्कि सर्वर्तुवने घने मधुं
सहायमाधाय कृता हतिर्नृणाम् ॥५१॥
खगे द्विधा रागिणि पद्मिनीगणे
स्फुटे करस्पर्शनजाङ्गजज्वरे ।
स्वलोकसाम्राज्यममंस्त निर्भयं
स मित्रमत्रानुसरन्निव स्मरः ॥५२॥
लतावलालास्यकलागुरुस्तरुः

१ सुष्ठु सूरस्य भासा अनुगतः, पक्षे सुष्ठु वसन्तभावेन आसानु=शिखरं मर्यादीकृत्य गतः=प्राप्तः । २ द्विधापि=अन्तः कामरूपं, बहिः सूर्यतापरूप च । ३ मित्रं सूर्यं वा सतेजसं अनुसरन् स्वयमपि तथा भवन् । ४ तरुः रणाद् न शमी अभवत् ।

शमी रणाद् न ह्यभवत् [1]समीरणात् ।
स [2]किङ्किरातोऽपि किरातजातवद्
भियेऽध्वगानां सपलाशवासनः ॥५३॥

रजो दधानामपि माल्लिवल्लिकां
प्रसूनगन्धोत्करपश्यतोहरः ।
जहौ न दूरे मधुपोऽ[3]न्धसाऽऽदरा-
दहोऽलिमत्ते समये [4]न चेतना ॥५४॥

स्फुटार्त्तवाङ्का धृतकामधीर्गजं
प्रभिन्नगण्डं तदचण्डगर्जितम् ।
असेवतामुं मधुगन्धवारिणि
हृदे मदेनोच्चकरे करेणुका ॥५५॥

द्विधा बलं प्राप्य च सौरभास्थिते-
रनूनसूनस्पृगसेव्यताङ्घ्रिभिः ।
सरिद्वरात्यक्तनिपद्वराम्भसि
प्रणीतलीलाप्लवनो वनानिलः ॥५६॥

---

१ समीरणात्=वायोः। २ किङ्किरातः=कोरण्टकः पलाश-वासनायुक्तः भियेऽभूत्। पलाशं=पत्रं राक्षसश्च। ३ अन्धसा=भोजनेन चादरात्। ४ न विवेकः।

अथ खमादाय भयेन मन्थनात्
तडागभागव्यपदेशलेशतः ।
पुरोपकण्ठे शरणागतं प्रभुः
कदाचिदम्भोधिमिह व्यलोकयत् ॥५७॥
जडात्मकत्वादुपभोग्यताच्युतं
चिरत्नरत्नाधिकमुत्थितं चिरात् ।
दधत् त्वधः स्वं विभवं स चक्रिणा-
ऽप्युपाललम्भे कृपणाक्रियाश्रिया ॥५८॥
वदान्यलोकेन कृताः प्रपास्त्रपां
कथं न धत्से रसभृत् समीक्ष्य ताः ।
निलीय तस्मिन्निवसन्नपांनिधि-
र्भवानतस्त्वां मकराकराऽस्तु धिक् ॥५९॥
इतीव मन्ये भगवद्गवीरसात्
सितोपदेशां स सुधां सुधारयन् ।
विशिष्य पुष्यन् वसुधां रसागमै-
र्वने तडागो ददृशेऽवनीभुजा ॥६०॥
पयोनिलीनाऽभ्रमुक्तामुक्तावली-

बलीयसां राजिरमुष्य दन्तिनाम् ।
पिपासुराक्रान्तिपदाद् दिवा दिवा
पुरस्य साम्यं सरसांऽघ्रिनाऽवदत् ॥६१॥
जलान्तसद्भिन्नमदान्धसिन्धुर-
रदाननं तोरगपुच्छसच्छवीन् ।
निरीक्ष्य मेने नगरीं नु भोगिनां
समापतन्तीं जिनसेवया जनः ॥६२॥
जिनेशितुर्दर्शनलालसाऽलसा
भुजङ्गकन्या हसितोन्मुखश्रियः ।
जलार्धरुद्धस्य तटान्तभूभिदः
पदात् पयोजन्मवनस्य रेजिरे ॥६३॥
वशीकृते तत्सरसाप्सरोजने-
ऽवतारमासे प्रतिबिम्बितोडुभिः ।
सरोरुहे सौरभचौरबन्धनं
मृणालजालस्य मिषाद् बभार यः ॥६४॥
तटान्तविश्रान्ततुरङ्गमच्छटा-

१ दिवा=स्वर्गेण ।

स्तटाक एष प्रतिबिम्बितैर्दधौ ।
अमन्दनन्दीसरसो जिगीषया
चलाचलोत्तुङ्गतरङ्गसंगमैः ॥६५॥
पिनाकिनाकिप्रभुराजराजिभिः
समं तटस्थे क्षितिपे पटालये ।
स्फुटानुबिम्बोदयचुम्बनेन यः
स्फुटीचकाराप्सरसां प्रभोः सभाम् ॥६६॥
जलान्तरुन्मज्जदनेककामिनी-
मनोऽनुषङ्गात् तरलैरिवामलैः ।
बभौ चलद्वीचिकशान्तशान्तनै-
र्हयानुबिम्बैरविलम्बमेव सः ॥६७॥
तमेकमुच्चैःश्रवसं विडौजसे
प्रकाशयन्तं मथितेऽपि चाशये ।
जिगाय वार्धिं तुरगानुबिम्बितैः
सहस्रमुच्चैःश्रवसामिव श्रयन् ॥६८॥
सिताम्बुजानां निवहस्य यच्छलात्

---

१ अप्सरसां प्रभोः=इन्द्रस्य सभाम् ।

पयोनिधेः पारगतं यशोभरम् ।
न्यवेदयत् पारगतस्य किंनरैः
प्रगीयमानं [1]लसदङ्गमानसैः ॥६९॥

सरोरुहां तत्र च खण्डमण्डनं
बभावलिश्यामलितोदरश्रियाम् ।
[2]स्वनाथदर्शिक्षितिकामिनीमुखं
विकस्वरेन्दीवरचारुनेत्रभृत् ॥७०॥

स[3]कर्णिकं तत्र ललद्वधूमुखं
सपत्रलेखं कृतपद्मसौहृदम् ।
तमःसमच्छायकलङ्कसंकुलं
निरीक्ष्य चक्रे [4]स्वमहर्निशं शशी ॥७१॥

अभात् सभा सा रसभासुरानना
नृपस्य नीरे प्रतिबिम्बिताश्रिता ।
यया तडागोऽब्जजयार्थमौर्जिजत्
कुलं सुधांशोर्बहुलं वहन्निव ॥७२॥

---

१ लसन्ती अङ्गमानसे द्वे अपि येषां तैः । २ स्वनाथदर्शिन्याः क्षितिरमण्याः । ३ कर्णाभरणम् । ४ स्वम्=आत्मानम् ।

रैथाङ्गभाजा कमलानुषङ्गिणा
सरस्तदालोक्य सें-सार-सं-गतम् ।
क्षैणाद् गणागाहननीरसं गतं
दधे मनोऽन्तर्भवनीरसंगतम् ॥७३॥
अँकारि धर्मेण जगज्जयो मया
शिली-मुखस्तोमसखेन शार्ङ्गिणा ।
सँ चापरागः स्वत एव मां भजन्
परागसः किं न विभागमानयेत् ? ॥७४॥
प्रबोधयत्येष तडागबान्धवः

१ चक्रिणा। २ सारं=श्रेष्ठं संगत=मिलितं तेन सहितम्' सारस्ययुक्तं वा, सारसैः सहितं गतं=प्राप्तम् । ३ क्षणेन लोकानामवगाहनेन नीरसं=रसाभाव=नीरसत्वं गतं प्राप्तम् । ४ धर्मेण =धनुषा । मया किंभूतेन, शिलीमुखस्तोमसखेन=बाणसहायेनेत्यर्थः, शार्ङ्गिणा= शार्ङ्ग=धनुः तद्धारकेन । कि० जगज्जयः, शिली=शिला अस्मिन् पर्वत इव लुप्तोपमा महान् दुष्करः गुर्व्वित्यर्थः । धर्मपक्षे मुखे प्रारम्भे स्तोमो=यशः=पूजा सखा= मित्रं यस्य तेन । धर्मेण किं० शिली=जलौकाः, तत्प्रमुखाणां यः स्तोमः=समूहस्तस्य सखा इव सखा य. स शिलीमुखस्तोमसखः द्वीन्द्रियादिरक्षक इत्यर्थः तेन । ५ सः=धर्मस्तु अपराग एव, पक्षे चापरागः=धनूरागः । ६ विगता भा यत्र तद्=विभं=नरकं तस्य अगं=वृक्षं शाल्मलिं न नयेत्, काकुः ।

कृताधिकोशाञ्जलीपद्मपाणिभिः ।
सरोजिनीस्तम्बकदम्बकैतवात्
श्रियश्चलत्वं निगदन्निवेह नः ॥७५॥
जगच्चिरं जीवयता रसार्पणे-
र्विरागता हंसविलासभाविना ।
सरोजिनीस्तम्बकदम्बकैतवात्
कृताऽमुना मे स्वरसानुषङ्गिणा ॥
प्रभा-सितं वा समयज्ञमुज्ज्वलं
विभावयेऽमुं कलहंसशिक्षितम् ।
प्रयोगकर्त्रा विधुना पदे पदे-

---

१ वीनां=पक्षिणां रागता, पक्षे विरक्तता, हंसानां विलासभावित्वं, पक्षे हंसो=जीवस्तद्भावित्वम्=अध्यात्मविचारः । २ प्रभा=बुद्धिः तया सितम्=उज्ज्वलम् । ३ समः=समग्र-यज्ञः=पूजाविधिर्यस्मात् तत्र पूर्वं जनयाम्येव । ४ कलाः=मधुराः हंसाः=योगिविशेषास्तेभ्यः शिक्षितम् । ५ प्रयोग-कर्त्रा=सूत्रकारकेण विधुना=चन्द्रनाम्ना, यद्वा प्रयोगः=प्रपञ्चः संसारस्य तत्कर्त्रा=विष्णुनाऽनुपात., यद्वा विधुना=कृष्णपण्डितेन ।

ऽमृ[1]णाल ! शेषा[2]हिभुवाऽ[3]न्वयायि यः[4] ॥७६॥

इति स्वचित्ते स विभाव्य भव्यधीः

प्रभुर्मुमुक्षुर्भवतो ययौ वनम् ।

जनेन चक्रेण च भूतलस्पृशा-

ऽमृ[5]णालशेषाहिभुवाऽन्वयायि यः[6] ॥

गच्छाधीश्वरहीरहीरविजया-

म्नाये निकाये धियां

भृत्यः श्रीविजयप्रभाख्यसुगुरोः

श्रीमत्तपाख्ये गणे ।

शिष्यः प्राज्ञमणेः कृपादिविजय-

स्याशास्यमानाग्रणी-

श्चक्रे वाचकनाममेघविजयः

---

१ मृणा=हिंसा आलं=मिथ्या तद्रहितस्य कस्याप्यामन्त्रणं चक्रिणा कृतम् । २ शेषाहिर्भूर्यस्य तेन विष्णुना, पक्षे शेषवंश्येन विधुना=चन्द्रेण रामचन्द्रेण, यद्वा, शेषाहिभुवा=पतञ्जलिना इत्यर्थः । ३ अनुयातः=तत्तुल्यः सेवितः । ४ यः=तडागः । ५ अमृणालो=महाजनः, शेषः=क्षत्रियादिः, अहिभूः=यथाधिकारी तेन, "अहिः सर्पे वृत्रे वप्रे स्यात्" इत्यनेकार्थ. । ६ नै० श्लो० १.१.१ ।

शस्यां समस्यामिमाम् ॥७७॥
तस्मिन् विस्मयकृत्काव्ये
तुर्यः सर्गोऽभवत्तराम् ।
प्राप्नोतु शिष्टाचरणात्
प्रतिष्ठामप्यनुत्तराम् ॥७८॥

इति श्रीनैषधीयमहाकाव्यसमस्यायां महोपाध्यायश्रीमेघविजयगणि-
पूरितायां चतुर्थः सर्गः संपूर्णः ॥ श्रीः ॥

## ॥ अथ पञ्चमः सर्गः ॥

---

तरङ्गिणीरङ्कजुषः स्ववल्लभा
    रसा रसानामवशा वशास्त्यजन् ।
अचीकरच्चक्रधरः प्रदेशनं
    यथेष्टमाहूय स तुष्टपूर्जनम् ॥१॥

प्रवर्धमानाः समितिक्रियाम्बुधौ
    तरङ्गलेखा बिभरांबभुव यः ।
स मार्गणानां समभीयुषां गणं
    प्रपद्य सद्योऽभिमुखीभवेन्न किम् ? ॥२॥

दिनाः क्षपा वेप्सितदानतः प्रपा
    नृपाज्ञया दित्सुकरैश्वरैर्बभुः ।
दरोद्गतैः कौकनदौघकोरकैः
    सरित्प्रदेशा इव संगताद्विजाः ॥३॥

स दानदेशः स्थिरचक्रभृद्रसः

---

१ रसा=भूः । २ समितिः= युद्धम्, यतिचर्या च । ३ प्रपा-रूपाः । ४ द्विजाः=विप्राः पक्षिणश्च । ५ स्थिरश्चक्रिणो रसो यस्मिन् ।

सदा नदेशः स्थिरचक्रभृद्रसः ।
धृतप्रवालाङ्कुरसंचयश्च यद्
धृतप्रवालाङ्कुरसंचयश्चयः ॥४॥
महीयसः पङ्कजमण्डलस्य य-
श्छलेन लोकाशनयानजन्मनः ।
समं सिता संचयनैश्च राजतैः
सुपर्वणां संगममादिशद् भृशम् ॥५॥
व्रजस्य चेन्दोर्मृगनाभिजन्मन-
श्छलेन गौरस्य च मेचकस्य च ।
अमानि देवासुरमन्त्रभासुरं
मनस्विनाऽन्योन्यसुहृत्क्रियातुरम् ॥६॥

---

१ नदेशः=समुद्रः । २ स्थिराश्चक्राः=जीवविशेषास्तैर्भृता रम्या=भूर्यत्र । ३ प्रवालानि=विद्रुमाः पल्लवा वा, अङ्कुराः=काश्मीरजन्मादीनि । ४ धृताः प्रवालानां=पल्लवानाम् अङ्कुराणां=जलानां संचयाः=संग्रहा यत्र दानदेशे । ५ चीयत इति चयः=राशिः=पुञ्ज इत्यर्थः, ईदृशो दानदेशः । "प्रवालो विद्रुमे वीणादण्डेऽभिनवपल्लवे" इत्यनेकार्थः; "अङ्कुरो रोम्णि सलिले रुधिरेऽभिनवोद्गमे" इत्यपि । ६ पङ्काज्जातं यद् मण्डलं वृन्दं तस्य । ७ लोकानाम् अशनं=भोजनं यानं=गमनं ताभ्यां जन्यस्य । ८ राजतैः=रूप्यमयैः । ९ सुपर्वणां=महोत्सवानां देवानां वा । १० कर्पूरस्य ।

ग्रहीतुरुद्ग्राहयितुः करास्थितं
कुशोदकं तत् सुहिताय चोभयोः ।
नैलेन मेने सलिलेऽनिलीनयोः
स्वपावनं जीवनभावनं पुनः ॥७॥
नवं सरश्चोदभवन्महोत्सवे
यथेष्टसृष्टाञ्जलिमृष्टवारिभिः ।
पराजितोऽभूल्लवणाब्धिरप्यत-
स्त्विषं विमुञ्चन् विधुकालकूटयोः ॥८॥
चलीकृता यत्र तरङ्गरिङ्गणै-
र्जिनेन्द्रदीक्षासमयोत्सवाम्बुधौ ।
हया दधुः स्वाप्लवनैर्महोर्मितां
व्रजा गजानामपि संघचारिताम् ॥९॥
मिथो रथानामपि सादिनां ध्वजै-
रवालशैवाललतापरम्पराः ।
मलीमसै रेणुगणैः सखीकृताः

१ नरेण । २ विधोस्त्विड्मोक्षः सृष्टवारिप्राप्त्या तोषात्, मम स्पर्धाकर उत्थित इति कालकूटत्विड्मोक्षः । ३ संघचारी=मत्स्यः ।

पयोनिधेर्धर्मनिधेर्व्रतोत्सवे ॥१०॥
बले बलद्वेषिपुरस्सरे चले
हया ध्वजाः शोणरुचः प्रसृत्वराः ।
ध्रुवं दधुर्वाडवहव्यवाडव-
स्थितिं त्रिलोकीजनसङ्गमार्णवे ॥११॥
व्रती बभूव प्रभुराप्य शुक्लजां
चतुर्दशीं तां बहुलां च लोचकृत् ।
कचेषु मत्वेव कषायपावक-
स्थितिप्ररोहत्तमभूमधूमताम् ॥१२॥
प्रकाममादित्यमवाप्य कण्टकै-
स्तपस्यतोऽभूत् तनुरर्हतः कटुः ।
पटुः समाधौ विमना मनाग् न सा
रसालसा वा नियमाद् यमादपि ॥१३॥
सुरार्चने चन्दनचन्द्रलेपनैः
करम्बितामोदभरं बिभृण्वती ।

१ बलद्वेषी=इन्द्रः । २ "कटुरकार्ये मत्सरे च दूषणे च कटू रसे । तिक्ते प्रियङ्गौ सुरभौ" । ३ चन्द्र=कर्पूरः । ४ आमोदेन विभ्रजपूरणी योगमाहात्म्यात् सर्वार्थसाधनी ।

तनुर्ननु प्रौढिसमाधिसाधनै-
  र्जिनस्य विश्वंभरतामिवाऽन्वशात् ॥१४॥
क्वचित् तनूत्सर्जनमुद्रया विभो-
  रनार्त्तिमूर्त्तिर्व्यरिवार्त्ति सा स्म या ।
धृतस्फुटश्रीगृहविग्रहा दिवा-
  निशं मृणालाभभुजावलम्बिनी ॥१५॥
यथाऽन्तिकस्थामरभक्तिवृष्टिभि-
  र्जिने धृतध्यानधने त्वऽधर्मणे ।
नवं सरस्तत्क्षणमभ्यभूच्छ्रिया
  सरोजिनी यत्प्रभवाप्सरायिता ॥१६॥
यदम्बुपूरप्रतिबिम्बितायति-
  र्गणा ग्रहाणां पुरतोऽर्हतः प्रभोः ।
तरंस्तरङ्गेषु भवार्णवान्तरं
  स्वमाह तीर्णं नटनेऽतिपाटवात् ॥१७॥
वने स्थितावस्य च चामरक्रियां
  मरुच्चरङ्गैस्तरलस्तटद्रुमः ।
सदातपत्रायितपल्लवोच्चय-

चकार सत्कारपदं दिवौकसाम् ॥१८॥
न धीरता तादृगिह क्षमाधरे
दधौ जिनो यामुदधौ गभीरता ।
निमज्ज्य मैनाकमहीभृतः सतः
परीक्षणाद् वाम्बुनिधेश्चलत्तया ॥१९॥
विपक्षतां यो गत एव योगतः
किमस्य शम्भोर्न नु पक्षताऽक्षता ।
पुरापि पारापतपक्षिणो भये
ततान पक्षान् ध्रुवतः सपक्षताम् ॥२०॥
पयोधिलक्ष्मीमुषि केलिपल्वले
जिनेऽप्यनैकान्तिकता कृता जनैः ।
तटेऽपि साधारणया धिया श्रिते
क्वचिन्न लेभे व्यभिचारचारिता ॥२१॥
कदापि देवोऽकृत हंसमंशतो

---

१ पक्षः=परिवारस्तेन विरहितो विपक्षः । २ 'नु' वितर्के अस्य पक्षता=आनुकूल्यं सर्वत्र अक्षता=पूर्णा न, काकुः, सर्वस्य हितावहत्वात् । ३ तत्तुल्यतुलानिपादनात् । ४ पक्ष सपक्ष विपक्षवृत्तिरनैकान्तिक एव, स्याद्वादाद् वाऽनैकान्तिकः स जिनः न ऐकान्तिकः स्यादिति भावः । ५ सजीयमवेद्यः ।

रिरंसुहंसीकलनादसादरम् ।
सुवर्णवर्णं जिनवर्णने कृते
विडौजसा क्षोभयितुं मनोऽर्हतः ॥२२॥
पुरः किरन्तं विकरं वसूत्करं
समौक्तिकं मौक्तिकयुक्तमैक्षत ।
स तत्र चित्रं विचरन्तमन्तिके
मनागपि क्षुब्धमना हि नाऽभवत् ॥२३॥
तपस्यतस्तस्य विवन्दिषामिषात्
स्वरागतः स्निग्धमनास्त्वरागतः ।
स देवदेवस्य निषेवणापरं
हिरण्मयं हंसमबोधि नैषधः ॥२४॥
प्रियासु बालासु रतक्षमासु च
ललन्तमेतं चरणानुरागिणम् ।
विसिष्मिये वीक्ष्य नृपो विरुद्धता
निवारिता द्वन्द्वबलेऽर्हतेत्यसौ ॥२५॥

---

१ समम्=अनुकूल मृष्टम् मौक्तिकं वाक्य यस्य स तम् ।
२ नैषध'=पूर्वं चमिन्चे चमूपतिः । ३ प्रियाललनं चरणानुरागित्वं चेति विरुद्धता निवारिता ।

सितच्छदं तं चरणानुरागिणं
द्विपात्त्रितं पल्लवितं च बिभ्रतम् ।
विभोर्मनोऽन्तः स्मरमेव भावितुं
सुरेण चक्रे बहुधाऽऽयुधादरः ॥२६॥
कृताभियोगः स तु योगसंगमे
प्रयोगदक्षेण तपोद्विपेन यत् ।
स्मरार्जितं रागमहीरुहाङ्कुरं
बभञ्ज मूलादनुकूलया धिया ॥२७॥
विमोहलीलां मिथुनालिपालितां
प्रदर्शयन् हंसमहामना मनः ।
शशाक नोच्चालयितुं विरागवान्
मिषेण चक्षोश्चरणद्वयस्य च ॥२८॥
महीमहेन्द्रस्तमवेक्ष्य स क्षणं
सुरं प्रशान्तं बहुधोपसर्गतः ।
जगाम पुर्यां प्रभुचर्यया मुदं
तदा दधानः स्मृतिसावधानधीः ॥२९॥
अवर्णयत् तच्चरितं विचिन्तयन्

१ निष्क्रमायमत्या ।

शकुन्तमेकान्तमनोविनोदनम् ।
स नैषधश्चानुदिनं सुधीरतो
सुधीरतां वीक्ष्य विभोश्चमत्कृतः ॥२०॥
प्रभोस्तपःसंतपनाद् वशीभव-
न्नहो न पार्श्वं द्युसदां जनः सदा ।
प्रियावियोगाद् विधुरोऽपि निर्भरं
स्वमापुपूषुः परिचर्यायाऽर्य्यया ॥२१॥
प्रकृष्टषष्ठाष्टमपाक्षिकादिभि-
र्वने सयोगासनधर्मसेवनैः ।
निरीक्ष्य देवं ध्रुवमेव देवता
कुतूहलाक्रान्तमना मनागभूत् ॥२२॥
अवश्यभव्येष्वनवग्रहग्रहा
नृणां मतिः क्रामति यत्क्रमानुगा ।
समूलमुन्मूलयितुं तदान्तरं
प्रचक्रमे चक्रमयं द्विषां क्रमात् ॥२३॥
पटुः पुरस्कृत्य पुराकृताकृतिं

१ यस्य=आन्तरच्छिद्रचक्रस्य क्रमानुगा नृणां मतिः क्रामति=चलति ।

यया दिशा धावति वेधसः स्पृहा ।
भवस्य वश्यस्तदवश्यपश्यधीः
प्रवर्ततेऽनर्त्तितया तयाऽऽतुरः ॥३४॥
तपोविधौ मन्दरसुन्दराशयः
स्थिरः प्रभुः स्यान्न कदापि चञ्चलः ।
तृणेन वात्येव तयाऽनुगम्यते
भियेतरेणैव नु कातराक्रिया ॥३५॥
वृते समाधेर्विधिनाऽऽत्मबोधने
धनेऽपरास्मिन् न मुनेर्मनोरुचिः ।
अनात्मलीनस्य मलीनताऽऽहता
जनस्य चित्तेन भृशाऽवशात्मना ॥३६॥
अथावलम्ब्य क्षणमेकपादिकां
धरन्नयं धीरतयैकतालयम् ।
तिथौ नवम्यां शुचिपोपपक्षजे
स शिश्रिये केवलबोधमुज्ज्वलम् ॥३७॥
तदुत्सवे कोऽपि जनः सुरो नवा

१ कर्मकर्तुः परमेन्द्रस्य आत्मनः ।

तदा निद्रुद्रावुपपल्वलं खगः ।
सुगन्धिपृष्टेरनु दिव्यनाटक-
प्रवर्त्तनेऽत्राप्सरसाप्रनर्त्तने ॥३८॥
समं तदोच्चैर्नमने ससं पुनः
प्रपञ्चने संवरणे तथाऽऽसने ।
स तिर्यगावर्जितकन्धरः शिरः-
प्रणामकृद् देवगणो नटन् बभौ ॥३९॥
स हंसदेवोऽपि विभोर्गुणावली-
निबद्धबुद्धिः समुपेत्य नृत्यकृत् ।
विशिष्टभक्तीर्बहुधा स्थितोऽन्तरे
विधाय पक्षेण रतक्लमालसः ॥४०॥
सनालमात्मानननिर्जितप्रभं
प्रयुज्यमानं त्रिदशैः सरोरुहम् ।
धृतातपत्रत्रयरूपमाबभौ
प्रभुप्रभावाद् बहुकाञ्चनाञ्चितम् ॥४१॥

---

१ रतं=नाट्यरमणं तस्य क्लमः=खेदः । २ आत्मना=स्वरूपेण आननस्य निर्जिता प्रभा येन तत् । ३ "काञ्चनं हेम्नि किञ्जल्के" इत्यनेकार्थः ।

उपात्तलक्ष्मि प्रभुवक्त्रपाणिना
    ह्रियाऽऽनतं काञ्चनमम्बुजन्म किम् ।
तमुच्छ्रितच्छत्रमिषेण दण्डभृद्
    निषेवते स्मादृतमुक्तसंपदा ॥४२॥
अहर्निशं सेवनया विभोर्द्विधा
    सचामरं त्वाऽमरमानसे प्रियम् ।
अबुद्ध तं विद्रुमदण्डमण्डितं
    पवित्रहस्तं शुचिमेव पण्डितः ॥४३॥
चकार कश्चिद् वरणत्रयीं न किं
    सुरश्च सिंहासनमर्हतः पुरः ।
परो महेन्द्रध्वजमाप्तभक्तये
    सपीतमम्भःप्रभुचामरं च किम् ॥४४॥
कृतावरोहस्य हयादुपानहौ
    विनेयुपस्तत्र वलद्विपस्तदा ।

---

१ पविः=वज्रं त्रायत इति पवित्रः=इन्द्रस्तस्य हस्तम्=इन्द्रहस्तं पण्डितः शुचि=पवित्रम् अजानात्; किं०२ वं [illegible] सचामरम् । २ पीतवर्णमछिलम्, अम्भःप्रभोः=वरुणस्य चामरमिव । ३इन्द्रस्य ।

नियोगतस्ताः सुमनःपरम्पराः
परागपूर्णा ववृषुर्विकस्वराः ॥४५॥
सुवर्णपद्मोदरचारचारुतां
ततः पदे रेजतुरस्य बिभ्रती ।
निवेशकल्याणपदं सुसंपदं
सुवर्णसेवामिव धर्त्तुमुत्सुके ॥४६॥
महोत्सवेऽस्मिन्नसुरैः सुरैः समं
तथैव मैत्री जनसंनिधेरभूत् ।
तयोः प्रवालैर्वनयोस्तथाम्बुजै-
रवापि मोदः सुमनस्तया यथा ॥४७॥
रुजाविरोधेतिकलिक्रिया मृते-
र्भियाऽभवद् निर्विषयाऽर्हतः श्रिया ।
रसेन सेने अपि सख्यमीयतु-
र्नियोद्धुकामे किमु बद्धवर्मणी ॥४८॥

---

१ एकं वनम्=उद्यानम्, द्वितीयं वनं=पानीयम् अनयोर्द्वयोः-रपि प्रवालैः=पल्लवैः, तथा अम्बुजैः, मोदः=हर्षं अवापि। २ रोग वैर-इति-क्लेशानां क्रियेत्यर्थः। ३ निर्गतः विषयः प्रसारो यस्याः सा।

विधाय मूर्त्तिं कपटेन वामनीं
शनैश्चरन् यां त्रिपदीमदीधरत् ।
प्रसृत्वरां तां पुरुषोत्तमः परा-
मनेकपेऽधत्त गणेशपेशले ॥४९॥
त्रिविक्रमोऽरिष्टबलं पिनष्टि यः
स्वयं बलिध्वंसिविडम्बिनीमयम् ।
तनूं न धत्ते किमनूनतेजसा
सचक्रपाणिश्च कृपाणिनां प्रभुः ॥५०॥
पुरा व्रते तीव्रतयैव केवलात्
तपःकलाऽश्रान्तनितान्तशान्तधीः ।
उपेतपार्श्वश्चरणेन मौनिना
मृषा चकारैष तृषां वृषार्च्चितः ॥५१॥
यतोऽतिदूरादपि ताप्यते वपु-
र्दृशोर्भृशोल्लासिदृशापि नाप्यते ।
तमर्हतः संनिधिनाप्तसौहृदं

---

१ कपटेन=विनयरूपेण वामनीं=नम्राम् । २ त्रिषु=स्थानेषु विक्रमः=बलं यस्य सः । ३ बलिध्वंसिनः=कृष्णस्य विडम्बिनीं=जित्वरीम् । ४ चक्रेण सहितः पाणिर्यस्य सः । ५ तृषां=लोभम् । ६ इन्द्रः ।

[1]नृपः पतङ्गं समधत्त पाणिना ॥५२॥
तदा[2]त्तमात्मानमवेत्य संभ्रमाद्
मदादिनाऽनर्थकृताऽऽप्तवाक्यतः ।
जराजनुर्मृत्युमुमुक्षुणा नृणां
गणेन दीक्षा जगृहेऽगृहेप्सुना ॥५३॥
पतङ्गवत् कश्चन सद्मपञ्जरात्
पुनः पुनः प्रायसदुत्प्लवाय सः ।
स्वकर्मसंलीनतया मलीनधी-
र्गृहे व्रतान्येव बभार भारमुक् ॥५४॥
प्रभोर्गिराऽन्तःप्रतिबुद्धमानसः
खगो मृगो वाऽप्यगजो मतङ्गजः ।
गतो विरु[3]त्योड्डी[4]यने निराशतां
प्रपद्य सद्यः प्रणमन् ययौ वनम् ॥५५॥

---

१ नृपः=भूचरो राजापि पतङ्गं=सूर्यं पाणिना मैत्रीवशात् अधत्त । २ मदादिना आत्तं=गृहीतम् । ३ विरुत्य=शब्दं विधाय पक्षिणो मुग्यत्वाद् उड्डयनं विरुतं च, लक्षणया स्वस्वशब्दित-गत्यादि । ४ मृगे उड्डयन=उत्प्लुत्य गमनम्, गजे उड्डयनं=शीघ्र-गमनमात्रम्, निराशतां=निर्लोभतां प्रपद्य=स्वीकृत्य उड्डयने प्रणमन् वनं ययौ इत्यर्थः ।

वयोगणः सुव्रतभाग् निशाशनं
निरस्य जीवान्तकबन्धनेऽप्यहो ।
न तत्प्रदत्तं फलमाददिताऽऽनने
करौ निरोद्धुर्दशति स्म केवलम् ॥५६॥

ससंभ्रमोत्पानपतत्कुलाकुलं
विमोचितात्मा कथमप्यतः स्वतः ।
कुलायमास्थाय जिनोपदेशतः
स्मरन् व्रतं प्रासुकभुक्तिभागभूत् ॥५७॥

मृगः शृगालादिररण्यजः परः
सरः प्रपद्योत्कतयाऽनुकम्प्रताम् ।
विचारयन् निर्भरमप्यपाद्ऽपा-
मचित्तमावाहगतं स्वतन्त्रधीः ॥५८॥

पुरे वने वा समवासृते प्रभौ
सरस्सुरैर्निर्मितमम्बुभिर्भृतम् ।
तमूर्मिलोलैः पतगाग्रहाद् नृपं
स्वैशब्दितैर्वान्यमिवाभ्यमन्त्रयत् ॥५९॥

---

१ निवार्य । २ व्यक्तशब्दैः पक्षिणामाग्रहादिव नृपं—नरमुख्यम् अभ्यमन्त्रयत्=आहुताय ।

जलं हि साङ्गं किल गाङ्गमाङ्गिना-
मपुण्ययोगाद् न हि पुण्यमिष्यते ।
[1]सरस्तदम्भोग्रहदम्भसंभवं
न्यवारयद् वारिरुहैः करैरिव ॥६०॥

पतत्त्रिणा तद् रुचिरेण वञ्चितं
न राजहंसेन पदानुरागिणा ।
न लक्षणैः श्रीकमलाकरैः परैः
सरोऽरुचच्चारु विभोः पदश्रिया ॥६१॥

कृते विहारे विभुना ततः समं
श्रियः प्रयान्त्या प्रविहाय पल्वलम् ।
अधायि [2]चक्रेण तु हंसकप्रभा

---

१ सरः स्वयं तस्या गङ्गाया अम्भोग्रहणं पुण्यमिति कपट-नाटकं न्यवारयत्, अपुण्यं गाङ्गं वारि न ग्राह्यमिति भावः। २ भगवद्विहारे चक्रं व्योम्नि चलति, तत्रायं भावः; श्रियः नूपुरमेतत् पल्वलं विहाय गच्छन्त्याः; अथवा, चक्रेण नभः-सरस्याः घनपुष्करोदयः अधायि = आकाशरूपे तटाके कमल-मिदं जातम्;

"पुष्करं द्वीपतीर्थाहिखगरागौषधान्तरे।
तूर्यास्येऽसिफले काण्डे शुण्डाग्रे खे जलेऽम्बुजे॥"

हंसकं = नूपुरं, पक्षे सूर्यस्य प्रभा। अत्र जलार्द्रतावशाद् नूपुरे न शब्दः, प्रभा तु भवत्येव।

नभःसरस्या घनपुष्करोदयः ॥६२॥

सुरैः कृताऽऽजानुपदं मणीचकैः
सुगन्धिभिर्वृष्टिरिहालिमालया ।
चलत्पदाम्भोरुहनूपुरोपमा
समादधे स्मेरदृशां विशां पथि ॥६३॥

सरित्प्रचारेऽपि सितच्छदांस्तदा
स्वभावनालीकरुचो व्रतिव्रजे ।
निरीक्ष्य सारूप्यधिया शनैश्चरा
चुकूज कूले कलहंसमण्डली ॥६४॥

जिनानुरागाद् द्युसदाऽनुयायिना
स्वहंसरूपावलिभिः समं पथि ।
क्वचित् तटिन्या निजजातिदर्शना-
च्चुकूज कूले कलहंसमण्डली ॥

प्रभोः प्रभावादविरोधबोधनात्
सहैव सिंहेन मृगी वनेऽचरत् ।

---

१ सितच्छदान्=मुनीन् दृष्ट्वा हंसालिः चुकूज । २ स्वभावेन न अलीकरुचः=मुनयः, पक्षे नालीकं=कमलम् । ३ सादृश्य-मत्या ।

विडालवालेन समं रिरंसया
चुकूज कूले कलहंसमण्डली ॥
नवा¹ सयोग्या² वसुधेयमीदृशः
प्रभोर्विहारे त्रिदशैरपि स्तुता ।
रसान् न कांस्कान् समसूत नूतनान्
स्वतः स्वमापूर्य च तूर्यनिःस्वनैः ॥६५॥
दिगाऽऽह पूर्वाप्यपरामधो भव
त्वमङ्ग ! यस्याः पतिरुज्झितस्थितिः ।
जडेषु नाथः कृतवारुणीरुचि-
र्ममेशितेन्द्रस्तु शतक्रतुर्जिने ॥६६॥
शून्यं नभस्तद्वसनेन शून्यधी-
र्न किं हि नः कौशिक एव यत्पतिः ।
इति प्रहाय क्षितिमाश्रिता नभः
प्रभौ समस्ता विबुधा जयत्यभुः³ ॥६७॥
⁴अजन्यभावेऽजनि नातिभक्तिभाग्

१ नवा = नवीना । २ योग्यैः सह सयोग्या । ३ जयति प्रभौ सर्वे विबुधाः = देवाः नभो विहाय भूमिं श्रिताः अभुः = रेजुः । ४ यो जिने भक्तिभाग् न अजनि = न जातः । किं० जिने, अजन्यभावे = उत्पाते सति जगत्त्रयेऽपि शान्तिकरे । तद्दिनाद् खगाः = पक्षिणः सुरासुरा वा तम् आश्रुकृशुः ।

जगत्त्रये शान्तिकरे जिनेऽपि यः ।
नरः सुरो वोपासि तद्दिनादिव
खगास्तमाचुक्रुशुरारवैः खलु ॥६८॥

भवेऽस्मदीयेऽजनि यत्र न प्रभुः[1]
प्रभा[2] स्वभावेन जिनेन्द्रसेवने ।
प्रतिप्रभातं द्विजरूपमागताः
खगा[3]स्तमाचुक्रुशुरारवैः खलु[4] ॥६९॥

गच्छाधीश्वरहीरहीरविजया-
म्नाये निकाये धियां
प्रेष्यः श्रीविजयप्रभाख्यसुगुरोः
श्रीमत्तपाख्ये गणे ।
शिष्यः प्राज्ञमणेः कृपादिविजय-
स्याशास्समानाग्रणी-
श्चक्रे वाचकनाममेघविजयः
शस्यां समस्यामिमाम् ॥७०॥

---

१ प्रभुः = समर्थः । २ प्रभा = बुद्धिः । ३ खगाः = मिथ्यादृष्टयो देवा विद्याधरा वा । ४ नैषधीयच० प्रथमे सर्गे श्लो० १२८ ।

तस्मिन् विस्मयकृत्काव्ये
पञ्चमः पञ्चमाञ्चितः ।
सर्गः सज्जनसंसर्गात्
श्रेयोऽध्ययनतत्परैः ॥७१॥

इति श्रीनैषधीयमहाकाव्यसमस्यायां महोपाध्यायश्रीमेघविजयगणि-
पूरितायां पञ्चमः सर्गः समाप्तः ॥ श्रीः ॥



१ पञ्चमैः=चतुरैः अञ्चितः=प्रशस्तः "पञ्चमो रुचिरे दक्षे" इत्यनेकार्थः ।

## ॥ अथ षष्ठः सर्गः ॥

---

न जातरूपच्छदजातरूपता
  न कङ्कणाद्याभरणैरलंकृतिः ।
मुमुक्षुणा क्वापि विधीयतां धिया
  स्वजातरूपैकसिचा भवद्रुचा ॥१॥

वेदन् स्वरागादपि वैभवस्थिति-
  र्द्विजस्य दृष्टेयमिति स्तुवन् मुहुः ।
विनिश्चिकायैप हि वै भवस्थितिं
  निजां जराजन्मकृताधिसंस्थिताम् ॥२॥

मुखेऽपि नालीकरुचिर्महात्मनां
  न संशयो वा न पराशनाशयः ।
अवादि तेनाथ समानसौकमा-

---

१ स्वस्मिन् जातं रूपं तदेव एकं सिक् यस्य तेन; भवन्ती रुक् कान्तिर्यस्य स तेन । २ यः कश्चिद् रागात्=स्नेहाद् द्विजस्य=ऋषेः वैभवस्थितिं वदन्; यथा, इयं वैभवस्थितिर्दृष्टा इति स्तुवन् वै=निश्चितं निजां भवस्थितिं विनिश्चिकाय । ३ पराशनं=हिंसा । ४ समाना=सदृशा तुल्या वा ये सौकसः=अगारिजनास्तेषा-मुपाश्रयन्ती या संसत्=सभा तस्याम् अर्हता इत्यवादि ।

मुपाश्रयत्संसदि चार्हतेत्यहो ॥३॥
तदस्ति नाभ्यस्तमिह द्युसद्बलं
छलं जयन्मन्त्रकलं च चञ्चलम् ।
तनूभृता येन यमोऽपि जीयते
जना[1]धिनाथः कर[2]पञ्जरस्पृशा ॥४॥
धिगस्तु तृष्णातरलं भवन्मनः
समुच्छलद्वाजिबलं विलोक्य यत् ।
परं[3] परार्थाच्च परम्[4]परार्थतः
समुन्मिषद्भूरिमिषेषु हे जनाः ! ॥५॥
करो[5]षि किं दुर्जनतां धनान्वितान्
समीक्ष्य पक्षान्मम हेम[6]जन्मनः ।
भृशं सखायो विवदन्त इत्यतः
परिग्रहे नाग्रहयालुता हिता ॥६॥

---

१ जनानाम् आधेः=मनःपीडाया नाथः=स्वामी । २ यमस्य करपञ्जरवासिना । ३ परः=उत्कृष्टः योऽर्थः ततः=शिवसाधनात् परं=दूरे । ४ परम्परया=क्रमेण अर्थतः=धनात्, भूरिमिषेषु समुन्मिषत्=जागरूकम् । ५ मित्रं प्रति अन्यमित्रोक्तिरियम् । ६ हेमसमुत्पत्तित इत्यर्थः ।

मितायुषा तृड् जनिता जनाऽञ्जनै-
  र्न बाधिका स्यान्नभसो नवाऽधिका ।
तवार्णवस्येव तुषारशीकरैः
  प्रवृद्धवेलेव तुषाररोचिषा ॥७॥
सदाऽऽदिनाथार्चनिकादिना दिना-
  गमे समेता स धनं जनोऽर्जनैः ।
मृषा कषायानपि मा कृथा वृथा
  भवेदमीभिः कमलोदयः कियान् ? ॥८॥
न केवलं प्राणिवधो वधो मम-
  प्रसक्तिभाजैकवपुष्मतीहितः ।
तदाश्रयान्याङ्गिजिघांसयाशयः
  कृतः क्षयायेव स नारकाश्रये ॥९॥

---

१ हे जन ! तव मितायुषा फलंभूतेन अञ्जनैः=पापैर्जनिता तृट् न बाधिका भवेत्= निषेधिका न स्यात् । २ आकाशात् । ३ नवीना । ४ चन्द्रेण । ५ हे० जन०, प्रातः पूजादिना धनं समेता= प्राप्ता । ६ अमीभिः=कषायैः कियान् कमलोदयः=लक्ष्मीप्राप्तः स्यात् । ७ एकजीवे वधः केवलं प्राणिवधो न, किन्तु तदाश्रया अन्येऽङ्गिनस्तेषां जिघांसया कृत आशयः=परिणामः नारके पातायैव भवेत् । ममो=ममत्वं, ममशब्दोऽस्त्यत्र, अमम-निर्ममादिवत्; तत्र प्रसक्तिभाजा=रागिणा, ईहितः=चिन्तितः ।

इमां नु शिक्षां कथयन्तमीश्वरं
त्वदीक्षणाद् विश्वसितान्तरात्मनः ।
करोतु रक्षां पततो भवाम्बुधा-
वितीह चक्रायुधभूपतिर्जगौ ॥१०॥

ततः प्रपन्नव्रतमेनमेनसा
वियुक्तमायुङ्क्त गणेशितुः पदे ।
विगर्हितं धर्मधनैर्निबर्हणं
वदन्तमेवं सकलेभ्यसंसदि ॥११॥

परेऽपि चाक्षत्रिमिता गणेश्वरा
बभूवुराप्ताः सदृशं दृशं भृशम् ।
गणेऽनुगानामविगानधीबलाद्
विशिष्य विश्वासजुषा द्विषामपि ॥१२॥

पदे पदे सन्ति भटा रणोद्भटाः
प्रशामयन्ते शमिनः स्म तानपि ।
द्वियुक्तषष्ट्या हि सहस्रसंख्यया-

१ अनुगानां तथा द्विषां गणे सदृशं दृशमाप्ताः अक्षत्रिमिताः=षट्त्रिंशद् गणधराः । *६२ सहस्राः शमिनः=यतयः ।

द्विधापि शान्तिक्रमलीनचेतसः ॥१३॥
सदा तदार्यापटलेषु शूकता-
ऽऽनतेषु हिंसारस एष पूर्यते ।
क्वचित् क्षमायां न मनाक्, तदुन्मनाः
स नारकानेव निषेवतां न किम् ? ॥१४॥
प्रमाणमार्यास्वपि भूरसैर्मिते-
रभूत् सहस्रैर्यदुदीर्णया गिरा ।
धिगीदृशं ते नृपते ! कुविक्रमं
प्रजेशमूचे मृगयाऽशुचिं शुचिः ॥१५॥
अविक्रियं वैक्रियलब्धिशालिनां
प्रभुर्यतोऽप्यङ्गसहस्रमालिनाम् ।
दयां दिदेश स्थलनीरचारिणि

---

१ शान्तिः=क्षमो जिनश्च । २ तस्य भगवतः आर्यास्मृतेषु दयाभावे आननेषु सत्सु क्षमायां=भूम्याम् एव हिंसारसः क्वचिदपि मनाग् न पूर्यते, इति हेतोः हिंसारसे उन्मनाः स=जनः नारकानेव न किं निषेवताम् ? नतेषु=प्रह्वीभूतेषु "आनतः प्रणतः प्रह्वः" 'णम् प्रह्वीभावे' धातुः । १२ यासाम् आर्याणां गिरा=वाण्या प्रजापि मानमाप्य ईशं=राजानमूचे, 'हे नृपते ! ते=तव कुविक्रमं धिक् ।

कृपाश्रये यः कृपणे पतत्रिणि ॥१६॥
फलेन मूलेन च वारिभूरुहां
तथा परेषामनुकम्पयाऽन्विता ।
*चतुःशताढ्यात्रिसहस्रवादिन-
श्चतुःसहस्रा [1]मनसोऽवबोधिनः ॥१७॥
शतत्रयीयुक्तचतु:[2]सहस्रिका
[3]मुनेरिवेत्थं [4]ममयस्य-वृत्तयः ।
अमुः प्रभोः केवलबोधशालिनो
दिशां प्रकाशादहिमांशुमालिनः ॥१८॥
जगत्त्रयं दण्डितमात्मसात् कृतं
विमोहराजा रजता रजोबले ।
त्वयाऽद्य तस्मिन्नपि दण्डधारिणा
कृता त्रिलोकी प्रभुताद्भुता करे ॥१९॥

---

* ३४०० वादिनो मुनयः । १ मनःपर्ययज्ञानिनः । २ वृत्तीनां विशेषणत्वात् स्त्रीलिङ्गम् । ३ एकवचनं जातौ । ४ 'म:'= शम्भुः=तीर्थकरः तत्प्रधानस्य=तदाज्ञानुचारिमुनेः=केवलिनः; मम=ममत्वं यस्यति=क्षिपति इति शप्रत्यये ममयस्या, इति वृत्तिविशेषणं वा ।

प्रणूयमानस्त्रिसहस्रयोगिनां
गणोऽवधिज्ञानवतां सुरैरिति ।
विभूषिताऽद्यापि च येन संस्मर-
त्कथं न पत्या धरणी हृणीयते ॥२०॥

इतीदृशैस्तं विरचय्य वाङ्मयै-
र्गणेश्वरैः पूर्वगणं पटूकृतः ।
मुमुक्षुवर्गोऽष्टशतीमितः स्थित-
स्तपोभरे यः स्वयमर्हतेरितः ॥२१॥

त्रिलक्षयुक्ता नवतिः सहस्रकाः
सचित्रवैलक्ष्यकृपं नृपं खगः ।
क्षमां गतो वाऽणुयतिः प्रतिष्ठित-
श्चकार वाचा परमार्हतं बहुम् ॥२२॥

---

१ येन गणेन, विभूषिता धरणी अद्यापि न हृणीयते । किं० येन, पत्या स्वामिना । २ संस्मरत्कथं सं=सम्यक्प्रकारेण स्मरन्ती कथा यत्र तत्, क्रियाविशेषणम् । ३ पूर्वगणं विरचय्य पटुः पण्डितः कृत· पटूकृतः । ४ लक्ष्यत इति लक्ष=चिह्न=लाञ्छना, विगतः अङ्को यत्र तद् विलक्षं तस्य भावः वैलक्ष्यम् । चित्रं=नाना तच्च तद् वैलक्ष्यं च तेन सहिता कृपा यस्मिन्, तम् । ५ कश्चिद् विद्याधरः आकाशचारी भूचारी वा श्रावकः । ६ श्रावकः ।

[1]उपासिकानां निवहास्त्रिलक्षभृत्
पुनः सहस्रत्रिनवत्यधिष्ठितः ।
दयासमुद्रे स [2]तदाशयेऽतिथी-
वभूव रत्नाकर एव केवलः ॥२३॥
प्रभुर्विजह्वे भुवि यत्र केवली
वलीयसो मोहगिरीन् विभेदयन् ।
रसैः प्रसन्ने जनमानसे सखी-
चकार कारुण्यरसापगा गिरः ॥२४॥
[3]मदेकपुत्रा जननी जरातुरा
पिता सनत्पूर्वकुमारतावियम् ।
पुरो गतौ स्वस्य निनंसयाऽऽगतौ
विमोच्य मोहात् स हि तावबूबुधत् ॥२५॥
प्रवर्त्तिनी वाल्यत एव सुव्रता-
[4]नवप्रसूतिर्[5]वरटा तपस्विनी ।

---

१ श्राविकाणाम् । २ तदाशये कृपाशये । ३ अहमेव एकः पुत्रो यस्याः सा । ४ नवनं नवः=जिनस्तवः तस्य प्रसूतिर्यस्याः सा; अनवप्रसूतिर्वा=न विद्यते नवा प्रसूतिर्यस्याः सा । ५ वरम् अटतीति वरटा, पृषोदरादित्वात्, "वरटा हंसयोषिति गन्धोल्याम्" इत्यनेकार्थे, सितच्छदत्वाद् वरटाया उपमा ।

स्थिरा सुहृग्मानसनीरजालये
    शुचिः सपक्षा चरणानुरागिणी ॥२६॥
मुनेर्गृहस्थस्य च चाऽर्हदागमः
    फलानि दत्ते त्रिदिवं शिवं ध्रुवम् ।
[1]गतिस्तयोरेव, जनस्तं[2]मर्दयन्
    रसेन हीनो भविता घनातपात् ॥२७॥
अहर्निशं सांतपनक्रियाविधौ
    प्रवृत्तिभाग् जैनरुचिं विना जनः ।
अधः पतेत् दुःखममुष्य बिभ्रत-
    महो विधे ! त्वां करुणा रुणाद्धि न ॥२८॥
मुहूर्त्तमात्रं भवनिन्दया दया-
    दरेण संसाध्य धियार्हतं मतम् ।
शुभं लभन्ते भविनो विनोदतः
    क्षणेन मुक्त्यम्बुजलोचनायुजः ॥२९॥
स्त्रियः श्रियो वा विरहासहा महा-
    सखाः सखायः श्रवदश्रवो मम ।

---

१ तयोः=मुनिगृह=स्थयोः गतिः एव आगमः । २ तम्=आगमम्, मर्दयन् त्रोटयन् भिन्दन् ।

इति प्रियालीनमलीनमानसा
न सातभाजोऽत्र परत्र देहिनः ॥२०॥
कु[1]शासनेनापि कुशासनेन ये
नयेऽनुरक्ता बहुविप्रयोगतः ।
निवृत्तिमेष्यन्ति परं दुरुत्तर-
स्तरस्विभिर्मोहमहोदधिस्तु तैः ॥२१॥
निजस्य वर्णत्रितयाग्रनिष्ठया
जनोऽत्र निर्वा[2]णिकया हृतेऽशिवे ।
इ[3]ति स्तुते स्मातिमुदेष शोषित-
स्त्वयैव मातः ! सुतशोकसागरः ॥२२॥
म[4]दर्थसंदेशमृणालमन्थरः
कदाऽभ्युपेता पथिकोऽथ बान्धवः ।
इतीह पृष्टो गरुडोऽपि यक्षराट्
तदाऽऽचचक्षेऽस्य[5] हितंससाक्षिकः ॥२३॥

---

१ ये कुशासनेन कुप्रवचनेन नये मार्गे शास्त्रे वा रागिणस्ते कदाचिद् निवृत्तिं वैराग्यम् एष्यन्ति, परं तैर्मोहार्णवो दुरुत्तरः । २ निर्वाणी देवी । ३ जनो निर्वाणीम् इति स्तुते स्म । ४ मम कारणमाश्रित्य मृणा=हिंसा कस्यापि दुःखदानं, तथा, आलम्= असत्य तत्र मन्थरः अलस. हिंसातोऽसत्यतश्च निवृत्त इत्यर्थः । ५ प्रच्छकस्य ।

मया नु पृष्टो भगवद्धिवन्दिषुः
 प्रियः कियद्दूर इति त्वयोदिते ।
विलम्बतेऽसाविति सा पराङ्मुखी
 सखी सखीं तां निजगाद नाऽऽदरात् ॥२४॥
कंचित् प्रभातप्रभया भयाहते
 भ्रमाद्यतो नीलमणित्विषा निशि ।
विलोकयन्त्या रुदतोऽथ पक्षिणः
. स्त्रियाः क्षणोऽभूत्कृतलक्षलक्षणः ॥२५॥
न यावता भागवती लगन्नया
 श्रुताऽस्ति गौस्तावदभीप्सता परे ।
चलाशु तस्याः श्रवणे विचक्षणः
 [3]प्रिये ! स कीदृग् भविता तव क्षणः ? ॥२६॥
कथं विधातर्मयि पाणिपङ्कजाद्
 [4]विधेर्जिनस्याशनपुण्यमुद्भवेत् ।

---

१ त्वया=अन्यया. त्वमन्योऽन्यार्थः । २ प्रभातादर्वाग् नीलमणित्विषा भ्रमाद् निशि रुदतः पश्यन्त्याः, अर्कं विना प्रभातप्रभयापि रुदतः, 'अद्यापि न रात्रिर्गता, कदा जिनदर्शनं करिष्ये' इत्याशयः । ३ कश्चिग् पतिर्निजां पियन्दितु प्रियां प्रत्याह, हे प्रिये ! शीघ्रं चल । ४ विधेः गुरुनियानः ।

इतीव सौराष्ट्रिकभव्यचिन्तनैः
स्थितः प्रभुः श्रीविमलाचलोपरि ॥३७॥
स्थितिक्रिया मासचतुष्टये प्रभो!
तव प्रिया शैत्यमृदुत्वशिल्पिनः।
ऋतोर्जनस्येव सुरैः समं भव-
त्विति प्रचक्रे सफलामसौ गिरम् ॥३८॥
तवाश्रयादेव च शान्तिरप्यभूद्
भियां प्रदेशे जिन! तत्त्ववालिके।
वियोक्ष्यसेऽवल्लभयेति निर्गता-
क्षरालिरीत्याऽत्र कदाप्यटाट्यते ॥३९॥
गुरुत्वभावात् शुचिशास्त्रसंभवात्
सुरार्चितत्वादतिपुण्यभूभवात्।
अदीदिपत् तीर्थकृदित्यसौ विभो-
र्लिपिर्ललाटंतपनिष्ठुराक्षरा ॥४०॥

---

१ हे प्रभो! मासचतुष्टये तव स्थितिर्जनस्य प्रिया, किं० तव, शैत्यं मृदुत्वं च तस्य शिल्पिनः कारकस्य, शैत्यं कामक्रोधोपशमात्, मृदुत्वं मानोपशमात्, जनस्य इति गिरं=वाणीं सफलां चक्रे। २ अवल्लभया=अनिष्टया। ३ 'अट गतौ', 'गत्यर्थाः प्राप्त्यर्थाः', प्राप्यते।

अयि स्वयूथ्यैरशनिक्षतोपमं
समं विषेहेऽप्युपसर्गकारणम् ।
सुरैर्नरैर्वा पशुभिः सहासुरैः
कृतं त्वमीषां विकृतं न मानसम् ॥४१॥
भुवं पुनानस्य तवेति निर्गल-
न्ममाऽद्य वृत्तान्तमिमं वतोदिता ।
तनोति संसद् दिवि गायनैः प्रभो !
पुरन्दरस्यापि पुरो महोदयम् ॥४२॥
प्रभोर्विहारे मगधेऽपि मागधैः
प्रवर्ण्यमाने विविधैर्महोत्सवैः ।
मुखानि लोलाक्षि ! दिशामसंशयं
प्रियोऽवदत्पश्य विभूषणैरितः ॥४३॥
खसिन्धुचापप्रभयोन्नतावित-
स्तनूं प्रिये ! पश्य महोज्ज्वलां दिशाम् ।
मुखान्यमुष्याः किरणैश्च तामसाद्
दशापि शून्यानि विलोकयिष्यसि ॥४४॥

---

१ हं निर्गलन्ममम-स्य अन्ममत्य ।

ममैव शोके॑न विदीर्णवक्षसा
मनः किमाकस्मिकमद्य नोद्यतम् ।
निवेदितुं सर्वविदे तदास्पदे
बिडौजसाऽगामि भुवस्तलेऽञ्जसा ॥४५॥
मयाऽद्य मुक्तिः प्रतिपत्स्यते श्रिया
त्वेया विचित्राङ्गि ! त्रिपत्स्यते यदि ।
निषेवणाद् मे न कदापि मामतः
समेतशैलं चलितुं तु मा भज ॥४६॥
विहाय सर्वामथ तीर्थकृच्छ्रियं
विभुर्ययौ तद्गिरिशृङ्गमुन्नतम् ।
तदाऽस्मि दैवेन हतोऽपि हा हतः
सुरेशितेति प्रलपन्नुपागमत् ॥४७॥
त्रयोदशाहे किल शुक्रजेऽसिते
जिनः प्रपन्नानशनः शिवं ययौ ।

---

१ शोकेन न उद्यतम् । २ त्वया=अन्यया, त्वशब्दोऽन्यार्थः । विचित्राणि अङ्गानि तीर्थकृच्छरीराणि साधनानि यस्यास्तत्संबोधने हे विचित्राङ्गि ! त्वया=अन्यया भवत्या मे निषेवणात् कदापि श्रिया न विपत्स्यते अतः मां मा भज ।

अनुविनेया नवशल्यनुप्रभु
स्फुटं यतस्तेऽशिशवः परासवः ॥४८॥
तवापि हा हा विरहात् क्षुधाकुलाः
कुलाश्रया अन्यतपस्विनोऽधुना ।
त्वयीश ! भुक्ते त्वनुभुञ्जतामिति
गणीन्द्रमाशास्त हरिः प्रशस्तधीः ॥४९॥
विधाय कल्याणककर्म सोत्सवं
कुलायकूलेषु विलुठ्य तेषु ते ।
खगा इव स्तूपतटेषु च क्रमाद्
दिवं ययुस्त्यक्तशुचः सुरेश्वराः ॥५०॥
ततो विजह्रुर्गणिनः ससंयता
उपासकैर्भूपतिभिः कृतार्चनाः ।
चिरेण लब्धा बहुभिर्मनोरथै-
रुपादिशन्तः प्रभुशान्तिशासनम् ॥५१॥

---

१ प्रभोः पश्चात् अनुप्रभु, अत्र "विभक्ति" (सि० है० ३।१।३९) इत्यादिनाऽव्ययीभावः। २ अशिशवः=सदृशा पूज्या पा। ३ परे सिद्धा मानरूपा वा असवः प्राणा येषां ते। ४ निग्रहोऽत्र भोजनादेः, अधिकारात्। ५ कूलेषु=तटेषु आयः=लाभा-दिस्तत्प्रधानं कूटं तटं येषु ईदृशानि स्तूपतटानि स्तूपशृङ्गाणि; "कूलं तटे सैन्यपृष्ठे तडागस्तूपयोरपि" इत्यनेकार्थः।

प्रभोर्विमुक्तेः पदमाश्रिताः सुरा
अपूपुरन्नीप्सितमंह्रिसेविनाम् ।
कदापि साक्षाद्भवनात् कदाचेन
गताः क्षणेनाऽस्फुटितेक्षणा ममम् ॥५२॥

सुताः कमाहूय चिराय चुङ्कृतै-
रिवाण्डजाः पक्षबलं तथागमम् ।
इहाश्रयन्तामिति शिक्षया क्रमाद्
ययुर्विनेया गणिनां गणेशताम् ॥५३॥

विधौ विधेया मतयो विधेयका
विधाय कम्प्राणि मुखानि कं प्रति ।
वृथा निरीक्षध्वमितस्ततः किमु
ऋते न बोधात् सविधेः शिवाश्रयः ॥५४॥

गुरोर्निषेवा श्रुतदानपूजना
जनाः ! कुरुध्वं स्वगुरूदिताध्वना ।

---

१ क्षणेन उत्सवेन, अप्रकटम् ईक्षणं दर्शनं येषां ते, ममं=ममत्वं गताः=आप्ताः । २ कम्=आत्मानम् आहूय=प्रसाद्य=अभ्य-स्य=प्रत्यक्षीकृत्य । ३ अण्डजानां पक्षे आगमं=वृत्तम् । ४ विधिः क्रिया तत्सहितं बोधं ज्ञानं विना न मुक्तिः ।

कथासु शिष्यध्वमिति प्रमील्य स

परम्परामार्गमचालयद् गणी ॥५५॥

फलेग्रहिः शान्तिजिनोदितागमः

क्रमेण शाखाबहुलः स्फुरत्पदः ।

प्रमोदजन्यात् श्रवणेन विश्रुतः

श्रुतस्य सेकाद् बुबुधे नृपाश्रुणः ॥५६॥

दानमदादमदाद् दमदान्ते-

र्दीनदयालुतयाऽवनिपालः ।

शस्यतमे परिसंस्मृतशान्ते-

र्नाम्नि च विस्फुरिते श्रुतियोग्ये ॥५७॥

शैवपदस्य पदव्यवबुद्धा

दुर्णयवर्णितिरेव निषिद्धा ।

रूपमदर्शि धृतोऽस्मि यदर्थं

चेतामि तत् त्वमिहास्मि स कर्ता ॥५८॥

---

१ जिनोदितागमः नृपाणां=अवनतानां प्रमोदाज्जाताद् श्रवणः नृपाश्रुणः सेकात्=सेचनाद् बुबुधे=प्रबुद्ध =विकसितो जातः, अन्योऽप्यागमः=वृक्षः जलसेकाद् विकस्वरः स्यात्। २ पदानि स्याद्यन्तत्यन्तानि, पक्षे पदं=मूलम् । ३ पर्णा=मार्ग. । ४ चेतामि=चित्ते धृत्वा, तत्=तस्मात् त्वाम् इह कर्ता [illegible] ।

देवनृदेवगणः स्तुतिमेवं
तस्य चकार गणेशवरस्य ।
मानसतोऽपि च मा क्षणमात्रं
गच्छ यथेच्छमथेत्यभिधाय ॥५९॥
आनन्दजाश्रुभि[1]रनुश्रियमाणमार्गान्
व्यक्तान् पदानि निदधद् बहुवर्णसंघैः ।
चक्रे ह्यने[2]कपमुखः स गणे गणेशो-
ऽप्यङ्गाश्रितत्रि[3]पदिका[4]गतभूरिलक्ष्म्याः ॥६०॥
लोकाननेकवचनामृतलुप्तदुःख-
प्राक्शोकनिर्गमितनेत्रपयःप्रवाहान् ।
कुर्वन् स सर्वविदनूक्तिरसात् तदोर्व्यां
रेजे सितद्युतिरिवाक्षगणाधिराजः ॥६१॥
पूर्वं रथाङ्गभृति पञ्चमकेऽपि पश्चाद्
रागेण वा भगवति स्मितपाद्मिनीशे ।

---

१ सेव्यमानः मार्गो जैनागमो यैस्ते ईदृशान् व्यक्तान्=परिष्कृतान् चक्रे । २ अनेकान् पाति=रक्षति दयोपदेशाद् ईदृशं मुखं यस्य सः । ३ त्रिपदी=गजाभरणम्, उत्पादव्ययध्रुवरूपा वा । ४ गता=प्राप्ता ।

चक्रे स चक्रनिभचंक्रमणच्छलेन
स्वस्मिन्प्रभाकररुचिं शुचिमण्डलस्थः ॥६२॥

सर्वत्र सार्वगणशासनसार्वभौम-
पट्टस्थितस्य गणिनोऽनुदिनार्चनासु ।
सिद्धिर्भवेद् भविजनस्य पुरःस्थितस्य
नीराजनां जनयतां निजबान्धवानाम् ॥६३॥

श्रीहर्षः कविराजराजिमुकुटालंकारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।

---

१ श्रीहर्षः पूर्णनाम्नि हीरहर्षनामतः पदैकदेशे पदसमुदायो-पचारात्, 'दत्तो देवदत्तः' इति न्यायात् । कविराजराजिमुकु-टालंकारहीरः= कः=अग्निर्ब्रह्मा वा विराजो=गरुडः, वराजः, विशिष्टराजो वा, एषु राजते शोभते कविराजराजिः=[illegible], अग्रे-[illegible], [illegible] हिरण्यगर्भत्वात्, विराजे गरुडे स्वर्णकायत्वात्, धनदे स्वर्णाधिपत्वात्; [illegible]मुकुटा-लंकारभूतः । श्रीहीरः=हीरविजयसूरिः, यं जितेन्द्रियचयं मुनि-पतिं, सुषुवे=प्रसूते स्म जनयामास=उत्पादयामास । मा=पुनः मा=लक्ष्मीः=[illegible] तद्रूपा या [illegible] [illegible] [illegible] स्त्री सुषुवे [illegible] [illegible] [illegible] मा-[illegible] । [illegible] श्रीहीरसूरिणा [illegible] [illegible] स्थापितं श्रीजिनमिति भावः । [illegible] पुत्रं, पक्षे सुतमिव, सुतोपमा, शिष्ये पुत्रपदारोपात् । [illegible], मध्यमपदलोपात्, [illegible] चिन्तां [illegible] यस्य, तस्य [illegible] [illegible]

एषां विनेयाः कवयः कृपाद्याः
पद्मास्वरूपाः समयाम्बुराशौ ॥४॥
तत्पादाम्बुजभृङ्गमेघविजयः
प्राप्तस्फुरद्वाचक-
ख्यातिः श्रीविजयप्रभाख्यभगवत्-
सूरेस्तपागच्छपात् ।
नुन्नोऽयं निजमेरुपूर्वविजय-
प्राज्ञादिशिष्यैरिमां
चक्रे निर्मलनैषधीयवचनैः
श्रीशान्तिचक्रिस्तुतिम् ॥५॥



तच्चिन्तामणिमन्त्रचिन्तनफले शृङ्गारभङ्ग्या महा-
काव्ये चारुणि नैषधीयचरिते सर्गो यमादिर्गतः ॥

इति श्रीनैषधीयमहाकाव्यसमस्यायां महोपाध्यायश्रीमेघविजयगणि-
पूरितायां षष्ठः सर्गः संपूर्णः ॥ श्रीः ॥



---

तस्मिन् । "शृङ्गं चिह्नविषाणयोः क्रीडाम्बुयन्त्रे शिखरे प्रभुत्वो-
त्कर्षमानुषु" भङ्गिः पुनर्भक्तिवीच्योः" इत्यनेकार्थं ; शृङ्गेषु=शिख-
रेषु आरो=गतिः=प्राप्तता यस्य स मेघः, "गिरौ वर्षति माधवः"
इतिवचनात् ; शृङ्गारस्य=मेघस्य भङ्ग्या=तरङ्गेण चारुणि=रम्ये ।
नैषधकाव्याज्जातं नैषधीयं तस्यैव चरितं=आचार=समस्यारूपो
यत्र तस्मिन् , सर्गः, यमाः=अहिंसादयः पञ्च महाव्रतानि सैव
संख्या आदिर्यस्य स =षष्ठः सर्गः संपूर्णः अभवत् ।

## प्रशस्तिः ।



जयति जगति जाग्रज्ज्ञानयोगाद् युगादौ
जिनवरनवरश्मिर्मारुदेवादिदेवः ।
तदनु दिनपकान्तिः शान्तिरर्हन् स चक्री
जिनपतिरपि पार्श्वः शाश्वतश्रीविवस्वान् ॥१॥
तदनु दनुजपूज्यस्तीर्थकृद् वीरनामा
निरुपममहिमाढ्यः सर्ववित्सार्वभौमः ।
तदनु गणधरालीपूर्वदिग्भानुमाली
विजयपदमपूर्वं हीरपूर्वं दधानः ॥२॥
कनकविजयशर्माऽस्यान्तिषन्मौढधर्मा
शुचितरवरशीलः शीलनामा तदीयः ।
कमलविजयधीरः सिद्धिमांसिद्धवीर-
स्तदनुज इह रेजे वाचकश्रीशरीरः ॥३॥
चारित्रशब्दाद् विजयाभिधान-
स्त्रयी सगर्भा घृतशीलधर्मा ।

एषां विनेयाः कवयः कृपाद्याः
पद्मास्वरूपाः समयाम्बुराशौ ॥४॥
तत्पादाम्बुजभृङ्गमेघविजयः
प्राप्तस्फुरद्वाचक-
ख्यातिः श्रीविजयप्रभाख्यभगवत्-
सूरेस्तपागच्छपात् ।
नुन्नोऽयं निजमेरुपूर्वविजय-
प्राज्ञादिशिष्यैरिमां
चक्रे निर्मलनैषधीयवचनैः
श्रीशान्तिचक्रिस्तुतिम् ॥५॥

